गानं—२७ दर्बार्. झंम्पट.

प. पालय सदा मामयि माधव! पङ्कजातकोमलनयन!

अ. नीलाम्भोधरमेचकतर! विधि-
नीलकण्ठनुत! दासजनामर-
सालकल्प! श्रीपद्मनाभ!
शौरे! जगदीश! मुरारे! पालय

सा रि स नि स री गा म[2] प धा नी

च. (१) सारसरसरागामयहानि-
धा प धा प धम प धानी सानी
दापदान! समसुधानीकाश!
री स गा रि सा रि नीं धपरिसास
वेणुगानलोल! वैरिपरित्रास!
सापधमपगारिस
साधुतमकूपारस! पालय

(२) वारणवरतापशमनचणदय!
वारिराशिकल्पितनिजशयन!
मारकोटिसुन्दर! मुनिहृदयवि-
हार! नागरिपुवाहन! पालय

(३) भूरिमुदितबृन्दारक! हाटकचेल!
श्रीलोल! गोपाल! चारुबाल-
चन्द्रभाल! नववनमाल!
सुजनावनशील! पालय

(ख) विष्णुपरमध्यमकालकीर्त्तनानि।

गानं—२८. कामोदरी. झम्पट.

प. चारुपङ्कजमृदुतर[3]निजपद! साधुजना-
वनलोलुप! सात्वतवर! मामव

१. 'आदिः', २. 'मा पा ध नी' क. पाठः. ३. 'क' मुद्रितपाठः.

अ. हीरादिमणियुतहेमदिव्यमकुटादिविराजित !
मानिनीनिवहमानसमोहन ! चारु

च. (१) पापहर ! मुनिमतिमणितलिभग ! माधव !
वारिदनिभ ! खलभौममर्दन !
सुमुदितबुधमाहेत !
रूपनिन्दितसुमशर ! रुचिरक-
लापधर ! निरुपमगुण ! यदुकुल-
दीप ! विदलितपदनतजनभव-
तापसमुदय ! गिरिधर ! मुरहर ! चारु

(२) वारणाधिपमदहरपटिमग-
माखिलनायक ! पन्नगवैरि-
वाहन ! कनकलसितवसन !
भारतीशनिषेवित ! सुविमल-
हारशोभितकन्धर ! रणमुख-
शूर ! मधुवनकलितनिरुपमवि-
हार ! हिमकरसमरुचिसुवदन ! चारु

(३) वामकरतलभुवि सुमसममग-
मावहतो वपुरयि तव
वासवानतपदसरसिजयुगल !
मामके हृदि विलसतु जगदभि-
राम ! सुललितमृगमदकालेतल-
लाम ! पशुकुलपशुपभयभरवि-
राम ! पङ्कजनाभ ! दयाकर ! चारु

---

गानं—२९. शङ्कराभरणं. चेम्पट.

प. सारसभवसेवितपदयुगलामल-
हिमकरसुवदन ! सरसिजनाभ ! मामव

अ. पारिजातकुसुमपरिमळितचिकुर !
निरुपमगुणगणसागर !
पातकसञ्चयभेदन ! सारस

च. (१) चारुयामुनसैकतविहरण !
शान्ततापसकलित ! मृदुहसित !
मारसुन्दर ! दितिसुतजलधर-
मारुताम्बुधिसम ! भुवनेश्वर ! सारस

(२) गोपधेनुकुलावन ! कबळित-
घोरदावदहनामितविक्रम !
कोपविनिहतपूतन ! गिरिधर !
घोषकमलदिवाकर ! यदुवर ! सारस

(३) नीरजायतलोचनयुग ! धर-
णीरमारमणातिमनोहर !
सारकनकमदापहसुवसन !
शङ्कराभरणालघुनिजभुज ! सारस

---

गानं -- ३० प. तुवराळी. चेम्पट.

प. सारसाक्ष ! परिपालय मामयि
सन्ततं करुणया जगदीश !

अ. नीरजाञ्जनकाधिकमेचक !
नीरदाभ ! करिनायकभयहर ! सार

च. (१) पादपातिसमदेवनिकाय ! हरे !
शिशुसोममनोहर !
भालदेशविलसितमृगमदतिलक !
सूदितारिगण ! निरुपमबल ! बल-
सोदराङ्गपरिचर्चितचन्दन ! सा

(२) भोगिभोगकलितावनिवास ! विभो !
विहगेश्वरवाहन !

---

१. 'द' घ पाठः. २ 'कवि' मुद्रितपाठ .

पूर्णकाम ! कलिदोषविनाशकर !
योगिजातहृदयाम्बुजखेलन !
सागराधिकगभीर ! मुरान्तक ! सार

(३) भीमसेव्यतम ! मङ्गळलील ! मुदा
कुरु मे कुशलं भव-
भीतिनाशनचणाद्भुतगुणनिलय !
भामिनीसमुदयाशयमोहन !
पद्मनाभ ! कमलाधरणीवर ! सार

---

गानं—३१. आहिरि. चेम्पट.

प. पन्नगेन्द्रशय ! निरुपमगुण ! वसुधा-
कमलावर ! पालय
भानुसोमनयनाम्बुजनाभ ! हरे !

अ. किन्नरीनिवहगीत ! सुपावन-
कीर्त्तिपूर ! मधुसूदन ! सुरवर-
सन्नताङ्घ्रियुग ! विकसितशरदिज-
सारसानन ! जगत्त्रयनायक ! पन्न

च. (१) मौनिलोकहृदयाम्बुजविहितनिवास ![1]
कुरुविन्दरदाखिल-
माननीय ! समशोकविनाशकहास !
शरणागतपोषण !
दानवारणमनोहरतरनिजयान !
दीनपरिपालक ! कल्पक-
सूनजातभृशवासितकचभर !
सूरिभीतितिमिरौघदिनेश्वर ! पन्न

(२) नन्दकायुध ! निवारितसुररिपुजाल !
पुरुषोत्तम ! शुकभृगु-

---

१. 'य ! शो' मुद्रितपाठः.

नारदादिपरिणुतबहुविधशुभलील !
कमलासनमदहर !
मन्दरोद्धरणचण ! मृदुभाषण !
नन्दगोपतनयामितविक्रम !
नन्दनीयतम ! महितविमलनिज-
नामधेय ! करुणालय ! जयजय पन्न

(३) चारुबिम्बफलरुचिरतराधर ! शौरे !
पदपातिजनामर-
साल ! नीलजलदोपमशोभ ! मुरारे !
विहगाधिपवाहन !
मारकोटिसम ! कलितलसितवन-
माल ! पीतवसनारुणकौस्तुभ-
हारकङ्कणविराजिततम ! परमा-
हरित्रिदशजनपरिवारित ! पन्न

---

गानं—३२. कल्याणी. रूपकम्.

प. सारसलोचन ! मामव भो दययामलतम !
सरसिजनाभ !

अ. नीरजशरसुन्दर ! निखिलविबुधमुनिभयहर ! सारस

च. (१) पापसमूहविभञ्जन ! पार्विकसोमसमानन !
माप ! निवारितदानव ! मान्यगुणातिमनोहर ! सारस

(२) भोगिवरेण्यनिवास ! विभो ! कमलासनपूजित !
नागभयापह ! पावननामनिकाय ! मुरान्तक ! सारस

(३) शेषपुरीश्वर ! माधव ! सेवकमङ्गलदायक !
भाषणविजितसुधारस ! पाटलबिम्बफलाधर ! सारस

---

१. 'पार्वसो' मुद्रितपाठ..

गानं— ३३. दर्बार्. चेम्पट.

प. शौरे! वितर कुशलमयि मेऽनिशं सकलजगदधीश!

अ. कारुण्यादिगुणालय! कनकाम्बर! सनकादिनिषेवित! शौरे!

च. (१) पालितवारणपरिवृढ! हिमकरभानुनयन! रुचिरलील!
कालकालनुतानघ! कमलावर! शमलापहसुचरित! शौरे!

(२) कामितदायक! मधुहर! तनुजितकाम! वदनविजितसोम!
श्यामदेहरुचे! वरसमरापतदमरान्तकविदलन! शौरे!

(३) नारदशौनकमुखनुत! सरसिजनाभ! गळविलसितहार!
वारिजायतलोचन! वसुधाभरण! सुधामृदुलवचन! शौरे!

---

गानं— ३४. सुरुट्टि. रूपकम्.

प. सादरमव सरसिजदलसुनयन! सकल-
सुजनभयभरहर!

अ. पादतलनतसुरमुनिसमुदय!
पद्मनाभ! दयाकर! माधव! सादर

च. (१) गोपहित! करतलधृतगिरिवर!
कुन्दविलसितनिजरद! यदुकुल-
दीप! जलधरसम! मधुरवचन!
दीनजनततिशुभकर! निरुपम! सादर

(२) घोरभुजबलमगधनृपतिहति-
कोप! सुमगणविलसितकचभर!
श्रीरमण! मृगमदनिटिल! वरद!
सेवकनिकरघनकलुषशमन! सादर

(३) कामजनक! मम वितर मुरहर!
कामितमहिवरशयन! निरुपम!
भूमिघनभरविदलन! समधिक-
बोधाकर! हिमकरसुवदनवर! सादर

---

१. 'गदीश', २. 'स', ३. 'भवभयह', ४. 'र सादर। सुजनभय-भरहर।' मुद्रितपाठः.

गानं—३५. आनन्दभैरवी. चेम्पट.

प. वारिजवदन! दनुजजालकाल!
मामव वरगुणवास!

अ. नारदमुखमुनिजन-
नम्यपाद! फणिवरशय! निरुपम! वारिज

च. (१) पाटलबिम्बविलसदधराविकमेचक! जलधर-
भासुरनिजतनुवरसुषम!
हाटकसुवसनधर! हारकौस्तुभविराजितकन्धर!
हर मम शुचमयि विहगवरतुरग!
सुराधीशमदहर! नाथ! वर- वारिज

(२) वारणभीतिहरणचतुरादृतसज्जन! खलतर-
वैरिनिकरजलधरपवन!
भूरिकरुण! परिजनपुण्यसञ्चय! मुरान्तक! माधव!
रदरुचिविहसितमुकुरशकल! परि-
लसामेय! हृदि सुराधीश! मम वारिज

(३) भानुशशाङ्ककलितनयनामितमङ्गळवितरण!
पावनसुविमलतमचरित!
सूनसुरभिकचभराम्बुरुहनाभ! दयापर!
भवभयहृतिचणचरणजलजयुग!
सदा देहि मम मुदानन्दामेह वारिज

---

गानं—३६. सौराष्ट्रम्. रूपकम्.

प. दिनमनु हृदि मम विहर विभो समराङ्कणपटुतमै-
दितिसुतकाल! विभो!

अ. वनरुहमदहरनयन! नि-
वारितपाप! रमावर! दिन

---

१. 'रसाधी'घ पाठः. २. 'र' मुद्रितपाठः.

च (१) परमकृपारसभरजलधे ! भासुरतनुसुषम !
हरविधिहरिनुतसुचरित ! हार-
विराजितकन्धर ! गोपरूप !
मुरळीनिनादरासिकातिमञ्जुहास ! दिन

(२) करिवरतापशमन ! भगवन् ! कान्तलळितवदन !
गरुडगमन ! निखिलभुवनकारण !
कौस्तुभशोभित ! भानुकोटिरुचि-
हेमचारुमकुटाङ्गदादियुत ! दिन

(३) फणिशयनामरमुनिशरण ! पङ्कजनाभ ! हरे !
गुणगणविवशिततमसम-
घोषनिवासिजनामल ! सून-
बाणमदहारिदेह ! वरपीतकान्तिपट ! दिन

---

गानं—३७. मध्यमावती. चेम्पट.

प. सारसमुख ! सरसिजनाभ !
कुरु मुदमयि दिनमनु

अ. वारणघनभयहर ! वचनजालजितसुध !
बुधाविहर ! सारस

च. (१) अमरवरनिकरमकुटरुचिलसित-
विमलचरणपरिहसितसलिलरुह !
शमलकुलजलदपवन ! मृदुळहस !
समरनिहतरिपुसमुदय ! जय जय सारस

(२) सरसघनसदृशकरणनिवह !
वरसरिदधिपशयन ! जनिमृतिभयहर !
हरिहयपुरहरकमलजपरिणुत-
चरित ! कलिकलुषविदलन ! जय जय सारस

---

१. 'सज' मुद्रितपाठः

(३) सनकमुखहृदयकमलमधुप ! कर-
सततकलितदररथचरण ! वरद !
कनकवसन ! समभुवनशरण ! भव-
कदनहरणचण ! यदुवर ! जय जय सारस

---

गानं—३८. सावेरी. चेम्पट.

प. सारसरसमृदुवचन ! मुदितसकल-
सुरनिकर ! जय सरसिजनाभ !

अ. मारजनक ! कोपाहतपर[1] ! सुकुमार !
विमलसोमोपमसुवदन ! सारस

च. (१) दानवारणसदृशगते !
पदपङ्कजनतवरदानलोलुप ! शुभचरित !
भानुतनयातटविहरण !
भव्यलील ! करुणाकर ! मुरहर !
दानववरघनकाननकुलदव !
सूनलसितचिकुरानतसुखकर ! सारस

(२) नीलवारिदरुचिरतनो !
भुजगाशनरथ ! धरणीभरान्तक ! मृदुहसित !
कालदमनाजनिषेवित !
कामपालसहजातुलभुजबल !
शैलधरण ! सुकपोल ! जितकनक-
चेल ! समभुवनमूल ! फणिशयन ! सारस

(३) कोमलालकयुतनिटिल ! व्रज-
वासिकृतसुकृत ! कुन्दराजितनिजरदन !
रामणीयकनिवसन ! सम-
कामिनीहृदयमोहन ! निरुपम !
भीमभवभयविराम ! तनुविजित-
काम ! सकलगुणसीम ! हितसुजन ! सारस

---

१. 'गोपाहितवर' क. पाठः.

गानं— ३९. सारङ्गं. चेम्पट.

प. कञ्जनाभ! दयया ममाखिलकामितं वितर
निरुपमगुणवसते!

अ. कुञ्जरेन्द्रघनभीतिविनाशन!
घोषयोषिदखिलाधिशमनपर! कञ्जनाभ!

च. (१) योगिवृन्दकलितेन पदा मम
योजयाशु मतिमुरगशयन! भगवन्!
वागगोचरपदामितविक्रम!
वारिजातरुचिरायतलोचन!
मन्दहासजितकुन्दवर! शर-
दिन्दुसुवदन! मन्दरधरण! कञ्जनाभ!

(२) घोरदैत्यदमनासितवारिद-
कोमळाङ्ग! घनजनिमृतिभयहरण!
मारवैरिकमलासनवासव-
माननीयशुभचरित! मुरान्तक!
कुण्डललसितगण्डयुग! शर-
खण्डितविमतमण्डल! शुभद! कञ्जनाभ!

(३) सूनवासितचिकुराखिलनायक!
शोभनीयमृगमदविलसितनिटिल!
भानुसोमकलितात्मविलोचन!
भारतीशजनकातिमनोहर!
चित्रपरमचरित्र! दुरितल-
वित्र! निरुपमपत्रिवररथ! कञ्जनाभ!

---

गानं— ४०. पूर्वकल्याणी. चेम्पट.

प. देवदेव! जगदीश्वर! जय भुजगाशनवाहन! मुरहर!
दिव्यहारमणिकुण्डलधर! भगवन्!

अ. पावनानुपमनिजभुजविक्रम !
पद्मनाभ ! वस मे हृदि माधव ! देवदेव!

च. (१) वारणपरिवृढतापशमनचण !
वासवमुखसुरसेवितपदयुग !
दारितमगधमहीप ! यदूत्तम !
तापसहृदयनिवास ! हृतशमल ! देवदेव!

(२) कुन्दविशदरुचिदन्तनिकर ! मुचु-
कुन्दविनुत ! शुभचरित ! सुकृतनिधि-
नन्दतनय ! यमुनातटविहरण !
नामविधुतकलिदोष ! वरसुगुण ! देवदेव!

(३ काळियफणिफणरङ्गकृतनटन !
कामद ! घनधरणीभरनाशन !
सालकनिटिल ! दयाभृतवीक्षण !
शान्तकदनिजदासनिकर ! पर ! देवदेव!

---

गानं—४१. तोटि. अटन्त.

प. मन्दरधर ! सुन्दरतर ! वसुधा-
भरनाशन ! जगदीश्वर ! जय जय
मारजनक ! सारसनाभ ! विभो !

अ. कुन्दकुसुमवासितचिकुर ! मु-
कुन्द ! विमलगुणगणनिवसन ! मन्दर

च. (१) सुररिपुजनसमुदयभीषण !
सुजनशरण ! मधुमृदुभाषण !
करणविजितघन ! वरभूषण !
गरुडगमन ! करिवरपोषण !
चरणविनतभयहृतिपर ! वर-
करुणारसवरुणालय ! पर ! मन्दर

(२) नवसरसिजसमरुचिरलोचन !
नमननिरतदुरितविमोचन !

भवविविनुतविभव! विरोचन-
भवमदहरसुमहितयाचन!
विविधविमलनिजसुचरित!
विधुवदन! हतकदनामृतकर मन्दर

च. (३) मम कुरु शुभमयि सुखदायक!
मधुमुरसुखफणिखगनायक!
शमितविमतभुजबलसायक!
सकलभुवनकुशलविधायक!
कमलसदृशरुचिपदयुग!
मम सततं कुरु विततं सुखमयि मन्दर

---

गानं—४२. असावेरी. चेम्पट.[1]

प. पालय माधव! मामनिशं मुदा सुधानिदानमम!

अ. भालतलपरिलसितमञ्जुहरिणमदतिलक!
पन्नगारिवरवाहन! मोहन!
पद्मनाभ! भुवनत्रयनायक! पालय

च. (१) श्रीकरयुगसरसिजसामोदपरिमृदितचरणतल!
चेदिमहीपतनुदलन!
पाकरिपुविनुतगुण! दीनशरण! यदुवर![2]
भानुभासुरकिरीटशोभित! वि-
भावरीशवदनामलानुपम! पालय

(२) नीलजलदसम! समलोकाधिगणहरणनिपुण![3] कम-
नीयचरित! मृदुवचन!
शैलधरणहृतमददेवपरिवृढ! सुरुचिर-
सारसायतविलोचन! मञ्जुळ-
सामगानरसिकानिमनोरम! पालय

---

१. 'आदिः' क. पाठः. २. 'सदानि' ख. पाठः, मुद्रितपाठश्च. ३. साधुलो' क. पाठः.

च. (३) भोगिशयन! नतजनशोकाघविशमन! गुणनिवसन!
बोधमय! भुवनमहित!
नागवरसमगमन! नारदमुखसेवित!
सागरालय! गभीर! नन्दसुत!
सामजेन्द्रवरदार्तसुरागम! पालय

---

गानं—४३. नीलाम्बरी. चेम्पट.

प. विमलकमलदललसितरुचिरनयन! यदुनन्दन! जय जय
शमलमहितगिरिकुलिश! मदनजनक!
अ. समरचटुलरिपुनिकरशमनपर!
जलजनाभ! वरजलदशोभ! पर! विमल
च. (१) नाकाधीश्वरसुखदायक! लोकेशामृतमृदुभाषण!
राकेन्दुद्युतिवदनाश्रितशोकौघप्रशमनपटुतम! विमल
(२) पापाम्भोधरपवनामरपालोनन्दनिकेतन! बहु-
गोपालवृत! कमलावर! कुन्दात्युज्ज्वलरदभासित! विमल
(३) कालिन्दीतटकृतखेलन! कारुण्याकर! मुरशासन!
हेलानिर्मितभुवनत्रय! हेमाहङ्कृतिशमनाम्बर! विमल

---

गानं—४४. शुद्धसावेरी. रूपकम्.

प. साहसिकदनुजहर! माधव! निरुपमतम!
सरसिजमदहरसुवदन!
अ. देहविराजितकोमलसौरभचन्दन!
देवराजनतपाद! सरोजनाभ! जगदीश्वर! साह
च. (१) कालियफणकृतनर्तन! कामद! धृतवरमण्डन!
सालकनिटिलतटाञ्चित! शङ्करविधिपरिपूजित! साह
(२) गोकुलकमलदिनेश्वर! घोरभवभयविनाशन!
श्रीकर! शुकसनकादिविचिन्तितपद! परपूरुष! साह

---

१. 'नि' क. पाठः. २. 'मधु' क पाठः मुद्रितपाठश्च. ३. 'श्रीशु' मुद्रितपाठः.

च. (३) केशलसितसुममालिक! केशव! भृतकरुणारस!
नाशितसुजनमनोमल! नारदमुखहृदयालय! साह

---

गानं—४५. भूपालम्. चेम्पट.

प. सामजेन्द्रभीतिहरण! विकसित-
सारसाक्ष! पाहि पाहि वरद! हरे!

अ. भीमवैरिजालहर! तनुविहसित-
काम! पाटलाब्जलसितमृदुपद! साम

च. (१) सारकृपानिलयासितवारिदकाय!
पदसेवकजनसुरसाल! योगिवरनारदतुम्बुरुगेय!
शारदेन्दुमुख! मङ्गलगुणगण!
भारतीशमुखसन्नुत! सुचरित! साम

(२) यामुनसैकतकलितमनोहरलील!
सनकादिकमुनिहृदयाम्बुजनिवसन! देव! कर-
[विधृतशैल!
कामितफलपरिपूरण! घनभव-
काननदव! पुरुषोत्तम! मधुहर! साम

(३) गोपकुमारवृताद्भुततरनिजवेष!
वसुदेवसुतामितकोपसन्दलितपूतन! निजजनपोष!
पापराशिहर! विश्वजनशरण!
पद्मनाभ! शरणागतभयहर! साम

---

गानं—४६. वेगड. रूपकम्.

प. करुणाकर! माधव! मामव भासुर-
कनकसुरुचिरनिजवसन!

अ. मुरशासन! जगदीश्वर!
मुखनिन्दितशशितरुचे! हरे! सदा जय जय करु

च. (१) पापहरण! मुनिमानितगुणगण! पालितसमभुवन!
गोपतनुधर! कुरु मे कुशलं सततं सुरासुरादि-
[सेवित! करु

(२) पातसुजनगण! मामकहृदि वस भाललसिततिलक!
वीतमदभवविविसेवित! भव्यरुचे! मनोजतात!
[शाश्वत! करु

(३) पादविनतसुगमाहिवरशयन! पङ्कजनाभ! विभो!
सादितविमत! सरसीरुहलोचन! वारणाधिपा-
[धिमोचन! करु

---

गानं—४७. कल्याणी. रूपकम्.

प. सारससुवदन! महनीयचरित! जय जय
सकलविबुधवरपरिणुत!

अ. मारमण! वरद! जितमायामेय! निखिलजनशरण! सारस

च. (१) दानवसमुदयवनदहनातेमनोहरभाषण!
दान्तमुनिहृदयकृतनिलय!
दीनजनकदनमोचन! धेनुभरण! वरगिरिधर! सारस

(२) कालियफणधरमददमनासितवारिदसन्निभ!
कामजनक! भवभयशमन!
सालकनिटिलविराजितचारुहरिणमदसुन्दर! सारस

(३) पङ्कजरुचिमदहरनयनारिनिषूदन!
शीतलभानुकुलतिलक! फणिशयन!
शङ्करविधिहरिसन्नुत! सारसनाभ! मनोहर! सारस

---

गानं—४८. यमुनाकल्याणी. रूपकम्.

प. परिपालय सरसीरुहनयन!

अ. चरणं तव कलये हृदि स्मरमोहन! खगवाहन! परि

च. (१) दीनजननिकरदेवतरो !
घनविलसितनिजदेह ! जलजनाभ !
मानितगुण ! रिपुसञ्चय-
मदखण्डन ! पटुभण्डन ! परि

(२) नन्दकविलसितबाहु ! विभो !
पदतलनतशुकनारदमुख ! शौरे !
सुन्दरकुरुविन्दरदन !
सुरनायक ! सुखदायक ! परि

(३) बोधकर ! भुवननाथ ! हरे !
फणिवरशय ! सुकपोल ! रुचिरहास !
श्रीधर ! करुणानिवसन !
श्रितपोषण ! मृदुभाषण ! परि

---

गानं—४९. कामोदरी. चाप्पु.

प. पदसानितमुनिजनसुगम ! पावनचरित ! करुणाकर !
स्मरसुन्दराङ्ग ! विभावरीशमनोज्ञमुख ! पद

अ. यदुतिलक ! धृतिविजितहिमनग ! मामपा-
रदुरितोरुपयोनिधेरव
पद्मनाभ ! सुरेन्द्रनुत ! पद

च. (१) श्रीरमणातिमञ्जुहसाखिलनाथ ! सुमुदित !
शेषशयन ! लोकगुरो !
नीररुहभवानत ! घोरविमतमदहर !
मारतात ! सुरारिहतिचण ! वारिराशिगभीरतम ! पद

(२) कामितदानलोल ! विभो ! वसुधापते ! वन-
दामलसितकण्ठतल !
भूमिभरहरानघ ! बोधाकर ! वर ! विमल !
कामिनीजनकाम ! रिपुजनभीम ! रुचिरललामधर ! पद

---

१. 'द' क. पाठः. २. 'स ! श्रि' मुद्रितपाठः.

च. (३) नारदशौनकादिनुत! गरुडासनाखिल-
नम्यचरणवारिरुह!
भूरिविवशपालन! पूर्णशुभनिकेतन!
वारिजाक्ष! दरारिधर! सुकुमार! भण्डनशूरतर! पद

---

गानं—५०. खमाज्. चेम्पट.

प. सारससममुख! परमव मां
सनकमुखविनुत! सार

अ. पाररहितभवघोरकलुषतर-
वारिराशिपरिपतितमयि सदय! सार

च. (१) कुटिलभुजगवरफणकृतसुरुचिरनटन! देव!
गोकुलकलशपयोनिधिपूर्णशशाङ्क!
निटिलतटलसितमृगमदतिलक! सु-
नीलवारिदशरीर! यदुतिलक! सार

(२) मदनजनक! नवमणिमयसुललितहार! शौरे!
मञ्जुळवचनविमोहितविबुधनिकाय!
पदनतनिखिलमनोरथदायक!
पापजालगिरिकुलिश! सरसतर! सार

(३) सकलभुवनभयहरणपटुचरितजालामेय!
सन्ततं विहर मे मनसीह दयालो!
प्रकटबलदनुजभेदनलोलुप!
पद्मनाभ! भुजगाधिपतिशयन! सार

---

गानं—५१. भूपाळम्. अटन्त.

प. गोपालक! पाहि मामनिशं तव पदरतमयि गोपा

अ. पापविमोचन! पविधरादिनतपदपल्लव! गोपा

च. (१) साधुकथितमृदशनसरोषभीतमातृवीक्षित-
भूधरजलनिधिमुखबहुविध-
भुवनजाललळितमुखाम्बुज ! गोपा

(२) सारसभवमदहर ! सतीर्थ्यदीनभूसुरार्पित-
पाररहितधनचय ! निरुपम !
पतगराजरथ ! कमलावर ! गोपा

(३) सारसरससुवचन ! सरोजनाभ ! लोकनायक !
भूरिकरुण ! तनुजितमनसिज !
भुजगराजशय[1] ! मुरशासन[2] ! गोपा

---

गानं—५२. बिहाग्. चाप्प्.

प. स्मरजनक ! शुभचरिताखिललोकनायक ! मामव

अ. तरुणसारसदळनयन ! तपनीयरुचिवसनधर !
तनुविनिन्दितनीरदाद्दतनारदानतभूरिद ! स्मर

च. (१) पापदहन ! सुरविमतपाटनप्रसित[3] !
श्रीपते ! जलनिधिशयन ! भवतापनाशनपटुतर ! स्मर

(२) पावनसुगुण ! निरुपम ! भानुशशिनयन !
देवदेव ! पुरारिकमलजादिविषदधिपतिवन्दित ! स्मर

(३) पालितभुवनसमुदय ! परमपूरुष ! हरे !
भालशोभितसुरभिमृगमद ! पद्मनाभ ! जगन्नुत ! स्मर

---

गानं — ५३. गौरी. मट्टयम्.

प. सारसदळसुनयन ! सरसकुतुकममरीजनसन्नुत !
जय जय

अ. मारमण ! वरद ! गतमदसेवित ! मदनजनक !
परभीषण ! जलजनाभ ! पर ! सारस

---

१ 'यन ! मु' मुद्रितपाठ २ 'न तानादरितोन्तरि उदनितधित्तिलानतरनातनदरि-धित्तांकिटतकझो झा धित्ताकिटतकझो झों धित्ताकिटतकझो झो । गो' घ पाठ. ३. 'थि' मुद्रितपाठः.

च. (१) विमलविधुवदन ! शुभगुण ! सुमुदितमुनिजन !
विमतदलनपटुभुजबल ! भुजगवरशयन !
कमलभववनितपदयुग ! सकलजनशरण !
कलुष[1]दवदहन ! मुरहर ! भारितपुरुकरुण ! सारस

(२) धरणिबहु[2]लभरहृतिपर ! मृदुतम[3]विहसित !
तरणिशतलसितसुमकुट ! कटकवलयधर !
गरुडगमन ! घनजनिमृतिहरणचणचरित !
कलितकनकनिभसुवसन ! विनतसमसुखद ! सारस

(३) सुरभिहरिणमदतिलकितनिटिलतट ! परम !
सरसवचनजितमधुरस ! मधुवनविहरण !
सरिदधिपसदृश ! निरुपम ! पुरहरसुमहित !
जनितदितिजभय ! निर[4]वम ! दिश मम शुभमयि[5] सारस

---

ख. विष्णुपरघनरागकीर्तनानि ।

गानं — ५४. नाट्ट. रूपकम्.

प. पाहि शौरे ! पतगाधिपवाहन ! मृदु-
पाटलपादसरोरुह ! पद्मनाभ !

अ. मोहनतनुरुचिजितकाम ! सुललाम ! रिपुभीम ! भूतकाम !
मुरशासन ! पटुतम ! रथचर[6]णधरण ! पाहि

च. (१) सारसाक्ष ! सरिदीशशयामलमणि-
भूषणभूषित ! पालितसामजेन्द्र !
शारदविधुमुखामलवेष ! धुतदोष ! गत-
रोषामरपोष !
जगदीश्वर ! मृगमदपरिलसितनिटिल !
कुन्दद्युतिमृदुमन्दस्मित ! कुरुविन्दप्रभरद ! पाहि

---

१. 'भ', २. 'हुभ' मुद्रितपाठः. ३. 'र' क. घ पाठ.. ४. 'रुपम' मुद्रित-पाठः. ५. 'यि । तान्ता तकजणुनद्रिमिततकतत्तधिन्नतकदीं तरितरिकिटजणुतरिदीं दींकिटतकधिंकिटताधिं किटतधिं । सा' घ. पाठः. ६. 'र । पा' मुद्रितपाठः.

च· (२) देवदेव! दितिजालिनिषूदन! मुनिमानसवा-
रिरुहालय! दीनबन्धो!
पावनतरगुणगणवास! मृदुहास! निज-
दासाधिनिरास!
परपूरुष! विरचय शुभततिमयि मम
जम्भप्रमथनडम्भप्रशमन! शम्भुप्रविनुत! पाहि

(३) वासुदेव! वनदामविराजित! करुणारस-
सागर! पाण्डववन्द्यपाद!
भासितगाङ्गेयोपमचेल! धृतशैल!
सुकपोलाखिलमूल!
भवमोचन! जलधरसमरुचिविलसित!
भूमन्! विहर निकामं मम हृदि भो मञ्जुनयन! पाहि

---

गानं—५५. गौळ. झम्पं[1].

प. कामजनक! रिपुगणमदहर!
कामितदानलोल! परिपाहि चारुमुख! काम

अ. भूमीरमाधिनाथ! भोगिभोगशयनातिमेचक! वि-
भो! मुनीन्द्रततिसेव्यपदयुग[2]! काम

च· (१) पाटलजपाधरानघ! भानुशशाङ्कलोचन!
हाटकोपमितचेल! भूरिरुचि-
हारशोभितगळाम्बुजलोचन! काम

(२) मोहनकिरीटभासित! मोदकरात्मभाषण!
देहलालसितदिव्यचन्दन! सु-
दीनलोकपरिपालनातिचण! काम

---

१. 'आदिः' क. ख. पाठः. २. 'पा' मुद्रितपाठः.

च. (३) वारणसमानयान! निवारितपापसञ्चय!
भारतीशमदनाशकातिगुण!
पद्मनाभ! धृतशङ्खचक्रवर! काम

---

गानं—५६ वराळी. चाप्.

प. मामव पद्मनाभ! सदा सुरसाध्यगणबहु-
मान्यचरित! विभो!

अ. भूमीभरहर! नतलोकवरद! मुरहर!
भोगिभोगनिवास! विकसित-
सारसोपमलोचनामल! मामव

च. (१) गोपनिकरवृत! कमनीयसुगुणनिवसन!
घोरदनुजमदहरण! लोकेश!
तापशमन! दीनकुचेलविपुलधनवर-
दानलोल! मनोज्ञतरमुरळीनादविलोलमानस! मामव

(२) केकिपिकनिकरयुतमोहनतममधुवन-
केलिनिरत! मृदुहसित! श्रीकान्त!
पाकनिधनसेवितपदयुगल! समुदित-
भानुकोटिविराजितमकुटातिभासित! यादवाधिप! मामव

(३) सोमसदृशमुख! बलदेवसहित! निरुपम-
शोभ! समसुजनशरण! गोपाल!
कामजनक! दारितवैरिनिवह! शुभकर!
कान्तपीतपटातिविलसित! भूरिनीलवराळिसमकच!
[मामव

---

१. 'मगमन' मुद्रितपाठः. २. 'श' क. ख. पाठ.. ३. 'भिवासि', ४. 'काधरि' मुद्रितपाठ.. ५. 'दि' क ख पाठः.

गानं—५७. आरभी. चेम्पट.[1]

प. श्रीरमण! विभो! कलयामि भवन्तमये
श्रितपालनलोलुप! माधव!
नागभीतिहर! नागभोगशय! श्रीरमण!

अ. भूरिकरुणाकर! पूतनाशकटधेनुकादिहर!
वेणुगानपर! चारुपिञ्छधर! श्रीरमण!

च. (१) भाललोचनतामरसासन-
शैलखण्डनसेवितपद! सुर-
सालकुसुमसुवासितकचभर!
नीलकान्तिघनोपमितसुषम!
कालियोरगफणाञ्चितनर्तन!
कामिनीनिवहमानसमोहन! श्रीरमण!

(२) वारणेशसमानगमालसु-
दारगुणगणवास! महीधर-
धीर! मधुवनकलितमनोज्ञवि-
हार! यदुकुलभूषण! मुरहर!
नारदादिमुनियोगिमनोनव-
वारिजातकळहंस! जनार्दन! श्रीरमण!

(३) रामसोदर! दुरितसमूहवि-
रामपटुतम! जलरुहनयन! नि-
काममृदुहस! निरुपमतम[2]! वन-
दामविलसितकन्धर! गिरिधर!
भौमवारिदसमीरण! सुवदन!
पद्मनाभ! दरचक्रवरायुध! श्रीरमण!

---

१ 'आदि.' क. ख. पाठः २. 'बलतर' मुद्रितपाठः.

गानं—५८ श्रीरागम्. चेम्पट.[1]

प. रीणमदादृत! पाहि हरे! जगदीश्वर!
शेषपुरीश! रमेश! गिरीशसुरेश-
विभाव्य! भूरिकरुणाव्ययोरुरस!

अ. बाणभुजखण्डन! पद्मनाभ! नत्रवारिदाभ! परि-
पालितेभ! धुतरोषलोभ! जय रीण

च. (१) पापघनसमीर! पादनतभरण! रुचिरकरण!
निखिलशरणातिमोहन!
गोपरूप! धृतदिव्यचापशर!
जातरूपवसनारिभूपहर! रीण

(२) शारदविधुमुख! चारुतररदन! विजितमदन!
मृदुलपद! नारदादिम-
नोनिवास! सितकान्तिहास! परि-
पातदासगण! भो धरासहित! रीण

(३) कामतात! परमकान्त! समवरद! रुचिरशरद-
चिकुरवर! दानसामज-
चारुयान! सुरपाल! हे नरक-
शूरदानवशरीरदारणचण![2] रीण

---

गानं — ५९. केदारम्. चाप्यू.

प. सरसीरुहनाभ! मां पाहि श्रीसरसीरुहनाभ!

अ. परमपावनचरित! करुणाभरितसुरमुनिनिकर! जय जय

च. (१) भुजगाधिपशयन! कोमळाम्बुरुहरुचिरनयन!
अजपुरन्दरविनुतशुभगुण! हर ममाखिलदुरितगणमयि

---

१. 'आदिः।' २ 'रणच' क. ख. पाठः.

देव ! दिश मम शुभमपि पाण्डुसुतासमसुखकर !
पीततररुचिरवसन ! सरसी

च. (२) समराहतदनुज ! मन्मथसदृश ! लीलामनुज !
विमलहिमकरलसितसुवदन ! कमलसायकजनक !
[मुरहर !
चारुकुसुमसुरभिकच ! हीरमुखमणिविलसित-
हेममयरुचिरमकुट ! सरसी

(३) गरुडासन ! करुणजिताम्भोधर ! दीनजनशरण !
दरवरोपमितगळ ! लोकेदारसुतविमुखाशयालय !
गोपसमुदयपरिवृत ! कान्तवनविहरण ! बल-
देवयुत ! नरकदमन ! सरसी

---

गानं—६०. रीतिगौळम्. रूपकम्.

प. परिपालय मां श्रीपद्मनाभ !

अ. शरणागतभरणोत्सुक ! शारदसोमसमानन !
विरिञ्चिसुरेश्वरसेव्य ! परि

च (१) तामरसायतलोचन ! चारुतनो ! धरणीधरधर ! वन-
दामविराजित ! दारुणदनुभवघनविपिनदहन ! परि

(२) दानमतङ्गजचारुविलासगते ! तपनीयवसन ! मुनि-
मानसतामरसालय ! मणिमयमकुटपरिलसित ! परि

(३) नीलघनोपमसुन्दरदेहरुचे ! निखिलामरभयहर !
शैलसुताधवसन्नुत ! शमय मम सकलगदमिह ! परि

---

गानं — ६१. सारङ्गनाट्ट. रूपकम्.

प. तापशमनं मुदा मयि तरसानिशं जगत्रयेश ! दिश

---

१. 'त', २. 'मोहनस', ३. 'रुणाजि' मुद्रितपाठ.. ४ 'नश', ५. 'के' क. ख. पाठ..

अ.    मारसुभगतम! करिभयहर! सुरमुनिमान्यगुणा-
म्बुजनाभ!    ताप

च. (१) सुरारिवरबलविमथन! सुधासदृशमृदुलवचन-
झरीक! मुनिहृदयनिलय! सरोजभवविनुतचरित! ताप

(२) कुचेलघनधनवितरण! कुबेरसखविनुतचरण!
कचापजितजलदनिवह! घननीहारविमलहसित! ताप

(३) रसाबहुलभरविदलन! रमावदनजलजमधुप!
रसाकर! खलगिरिकुलिश! वसानिशमनघ! मम हृदि
[ताप

---

(४. ख. श्रीपद्मनाभकीर्तनानि.)

गानं—६२.    परशु. चाप्प्.

प.    वन्दे सदा पद्मनाभं

अ.    पदवन्दारुमन्दारमम्बुधराभं    वन्दे

च. (१) कुन्दसमरदनभासं मुचु-
कुन्दनुतं तिलसूनसुनासं
सुन्दरतरदरहासं गुण-
मन्दिरमहिवरमञ्चनिवासं    वन्दे

(२) कामितफलदानलोलं हाट-
काटोपहारिमनोहरचेलं
कोमळतिलकनिटालं भव-
तामरसासनसन्नुतलीलं    वन्दे

(३) दिव्यचन्दनलिप्तगात्रं विबु-
धेन्द्ररिपुनिचयसाललवित्रं
सव्यसाचिवरमित्रं सम-
साधुजनामलपङ्कजमित्रं    वन्दे

---

१. 'प! सु', २. 'मधुव' मुद्रितपाठः. ३. 'गिरिक' ख., 'गिरीशमु' मुद्रितपाठः.
४. 'वनु' क. ख. पाठः. ५. 'शी' मुद्रितपाठः.

गानं—६३. मोहनकल्याणी. चेम्पट.[1]

प. सेवे श्रीकान्तं वरदं

अ देवारातिसमूहकृतान्तं
दीनपालनपरं स्मरकान्तं — सेवे

च. (१) कुन्दात्युज्ज्वलतापहहासं
गोपरूपमखिलार्तिनिरासं
बृन्दारण्यकृतात्मनिवासं
वीतमलं तिलसूनसुनासं — सेवे

(२) नागारातिवरेण्यतुरङ्गं
नारदादिहृदयाम्बुजभृङ्गं
भोगीन्द्राद्भुतमञ्चमभङ्गं
पूर्णशोभपदनिस्सृतगङ्गं — सेवे

(३) स्यानन्दूरपुरामलदीपं
सारसाक्षमघशालिदुरापं
भानुशशाङ्कदृशं वसुधापं
पद्मनाभमवितार्थिसुधापं — सेवे

---

गानं—६४. गौळिपन्तु. अटन्त.[2]

प. मामवानन्तपद्मनाभानिशं
मान्यगुणनिवास !

अ. सोमबिम्बवदन ! पदविनतजनताशोक-
तिमिरकुलपङ्कजबान्धव ! — मामव

च. (१) शातकुम्भमदभरहरचेल !
शतमन्युमुखदेवसमुदयपाल !
घातुकमधुमुखदनुजनिवहकाल !
कालकालविधिसन्नुताद्भुतलील ! — मामव

---

१, 'नम् । आदि. ।', २ 'त्रिपुट ।' क ख. पाठः.

च. (२) दिनकरतुहिनांशुकलितमञ्जुळनेत्र !
दिव्यमकुटकटकाङ्गदकटिसूत्र !
सनकादिमुनिगणहृदयाम्बुरुहमित्र !
सान्द्रवन्यमालालङ्कृतशुभगात्र !

(३) चारुमन्दहसित ! वचनजितपीयूष !
सर्वलोकमनोहारिरुचिरवेष !
मारजनक ! कृतसमसाधुपरितोष !
महिततरसङ्ग्रामदर्शितनिजरोष !

---

गानं—६५. आरभी. चेम्पट.

प. पद्मनाभ ! पाहि पद्मविलोचन!
परमपुरुष ! शौरे !

अ. छद्मरहितसनकादिहृदयाब्ज-
सद्म[1]कृतविहरण ! जय जय

च. (१) सर[2]सिजभवनुत ! शमलहरचरित ! शरदिन्दुनिभवदन
नरनारायण ! मधुमथन ! रमावर ! नरका[3]सुरनिषूदन !
कुरु शुभावितातिममेयगुणालय ! कुरुविन्दनिभरदन !
करिवरभयहर ! कनकरुचिरचेल ! कामितफलदायक !

(२) करपरिलसदरिकम्बुगदाम्बुज ! कम्बुसदृशकन्धर !
वरयमुनातटविरचितमुरळीगानवशगतधेनुकुल !
निरवधिपरवशजनतापमोचन ! नीरजारुणचरण !
स्मरकोटिमदहरमोहनतरगात्र ! स्मेरमुखाम्बुरुह !

(३) मुरमुखदनुजाळिरपि भवता खलु मुक्तिमहो गमिता
गरुडगमन ! बत विमुखता मयि श्रुतिकलित! तवानुचि

---

१. 'छवि' मुद्रितपाठः. २. 'रोजभ' क. ख पाठः ३. 'समर' पाठ.

उरगशयन! परिपालय मामलमुद्धवमिव सदयं
नरकनिवारण! गोपवधूजननयनामृतावतार!

[जय जय पद्म

---

गानं —६६. घण्टा. चेम्पट.

प. पालय पङ्कजनाभ! कृपालय!
पालितसुरजाल!
कालदमनविधिवासवसन्नुत!
कनकरुचिरचेल! पालय १
घोरदनुजकुलवीरमर्दन!
गोपालवधूलोल! पालय २
शारदपूर्णनिशाकरसन्निभ-
चारुमुख! सुशील! पालय ३
मुरफणिखगवर! कम्बुलसित-
कन्धर! सुगुणपाल! पालय ४
तरणिहिमकिरणनेत्रयुगल! शुभ-
हरिणमदनिटाल! पालय ५
पाटलबिम्बफलाधर! मोहन!
पावनतरलील! पालय ६
हाटकमञ्जुकिरीट! योगिहृद-
याब्जकलितखेल! पालय ७
भोगिवरशयन! भक्तनिवहघन-
पुण्य! जलदनील! पालय ८
सागरसमगाम्भीर्य! जगत्रय-
सार्वभौममूल! पालय ९
मारमणामलमणिमयकुण्डल-
मण्डितसुकपोल! पालय १०
मारजनक! गळभासुरकौस्तुभ-
मञ्जुळवनमाल! पालय ११

सामजभीतिविरामद ! पातक-
जलधरवातूल ! पालय १२
तामरसेक्षण ! कुन्दरदन ! वर-
तापसानुकूल ! पालय १३
आनन्दामृतरूप ! चिदेकर-
सार्णवकल्लोल ! पालय १४
स्यानन्दूरपुरालय ! नतजन-
जालविबुधसाल ! पालय १५

---

गानं—६७ बिलहरी. अटन्त.

प. सन्ततं भजामीह स्यानन्दूरेश्वर
अ. चिन्तितदायकं चिन्मयाकार सन्ततम्
च. (१) मन्दराद्रिधरमीशं मारजनकममरवृन्द-
वन्दितचरणं विश्वनायकं
दन्दशूकमञ्चवासं दानवाग्निकूपीट
नन्दनीयगुणमब्जसुन्दरनेत्रं सन्ततम्
(२) सामजाधिपवरदं सागरातिगाम्भीर्यं
कामिनीजनमोहनं कोमलवाचं
श्यामवारिधरदेहं शान्ततापसाधारं
वामदेवविधिसेव्यं वासवानुजं सन्ततम्
(३) श्रीनिधिमम्बुजनाभं क्षीरवारिधिशयं
दीनपालनधुरीणं धेनुककालम्
आनतलोकदुरितकाननगणदावं
सूनवासितचिकुरं सोमसमास्यं सन्ततम्

---

गानं — ६८. मोहनं. चाप्पु.

प. चिन्तये पद्मनाभमुदारं श्रीरसाजीवनायकं

---

१. 'दवा' क. पाठः

अ. अन्तकान्तकमुखाखिलसुरगण-
सन्तताश्रितचरणयुगमिह
सारसायतलोचनं हृदि चिन्तये

च. (१) नन्दनीयघनकान्तिविलासं
कुन्दसूनसदृशोज्ज्वलहासं
दन्दशूकवरमञ्चनिवासं
नन्दकादिहेतिसभासम्
इन्दुबिम्बसमाननं कुरु-
विन्दरदं मुरशासनं भक्त-
वृन्दपालनं घोराजिनिर्मित-
विमतनाशनं जनार्दनं
सुन्दराङ्गविनिर्जिताम्बुधरं
चारुरत्ननिवहशोभिकनककिरीटरत्नधरं
सरसीरुहासनवन्दनीयगुणालयं नव-
सरसीरुहसमचरण नखविधुकिरणपरिहृत-
शरणगतजनदुरिततिमिरमतिभूरिमहस चिन्तये

(२) सामजपरिवृढसङ्कटहरणं
कामहीनवरतापसशरण
क्षेमदानसततोद्यमकरणं
रामणीयकैकशरणं
हेमभूषणभासुरं वन-
दामविराजितकन्धरं सर्व-
कामदं परं लीलाधिकर्पर-
कलितमन्दरं पीताम्बरं
यामिनीशदिनेशनेत्रयुगं
लोकपीडनपरयातुधानकुलासुगणभुजगं
करिहस्तपीवरकोमळोरुयुगाञ्चितं लस-

१ 'र सरसी' क. ख. पाठ..

दमितबलझषकमठकिटिमुखविमलतनुपरि-
शमितखलतरविमतभदभरमनाथभरण चिन्तये

च. (३) घोरघोरभवकाननदहनं
क्षीरवारिनिधिकल्पितशयनं
नारदादिमुनिविरचितमहनं
भूरिपापतूलपवनं
तारमौक्तिकराजितं विश-
दारुणकौस्तुभदीपितं परि-
वारसेवितं भृगुपादलाञ्छित-
वत्सभासितं गरुडासितं
पारिजातसुमादिसुरभिकचं
कोमलाधरजितचारुबिम्बफलातिशोणरुचं
करपद्मधृतदरनीरजारिगदं शुभं श्रुति-
विततिपठनविवृतवदनशतधृतिनिजवसतिसित-
सरसीरुहसततविलसितसुनाभिकमलं चिन्तये

---

गानं—६९. शङ्कराभरणम्. रूपकम्.

प. भक्तपरायण! मामवानन्तपद्मनाभ! सततं

अ. मुक्तिद! फणिवरशयन! कृपालय!
मोहनतनुजितमदन! शुभरदन! भक्त

च. (१) नीरजारुणचरण! देवेश! वारणभयहरण!
घोरभवार्णवतारक! मधुकर-
कोमलालकावृतवदन! गरुडासन! भक्त

(२) कामितफलदायक! श्रीभूमीकान्त! भुवननायक!
मामपि तव चरणैकगतिं मुरमर्दन!
करुणामृतेन शिशिरीकुरु भक्त

---

१. 'त', २. 'चाम्पु' क. पाठ. ३. 'ह' क. ख. पाठः.

च. (३) स्यानन्दूरपुरवास! मनोहरचम्पकसुमनास!
सूनसायकतात! विविधमणिखचित-
शोभनपुरटकिरीट! रुचिरहास! भक्त

---

गानं—७०. मुखारी. झम्प.

प. पाहि सदा पद्मनाभ! पङ्कजाक्ष!
अ. देहि कुशलमनिशं दीनजनवत्सल! पाहि
च. (१) करुणालय[1]! भवदालयगमनविधौ बत मामकं
चरणमिह सकुतुकं कुरु जगदधीश!
मुरमथन! तव चारुमूर्तिदर्शने नयनं
परमुत्सुकमयि परमानन्दरूप! रचय पाहि
(२) करमपिच तव रमेश! परिपूजनविषयेऽनिशं
निरतमिह[2] विभो! कलय नीरदाभकान्ते!
चरणकमलमिलितसुरभितुलसीदलत-
त्परतरां[3] च नासिकां विरचय सुरेश! पाहि
(३) सरसतरकथापीयूषश्रवणे मम कर्णयुगं
कुरु[4] सामोदमपि वितनु परमपूरुष!
सरसीरुहभववासवपरमविनुतचरित!
सरिदधिपशयन! मे विहर हृदये देव! पाहि

---

गानं—७१. दशाक्षी. झम्प.

प. सरसीरुहनाभमुदारं कलये
अ. चरणविनतजनविबुधसालं देवं सरसी
च. (१) कमलाकरजलजपरिमृदिततरचरणं
खलदानवकुलदहनमतिविवशशरणम्
अमितामलगुणजलधिमतिरुचिरकरणं
हरवासवविधिविनुतमिभतापहरणं सरसी

---

१ 'कर! भ' मुद्रितपाठ. २ 'कुरु सामोदमपि वितनु परमपुरुष! चरण', ३, 'रा च', ४. 'निरतमिह विभो! कलय नीरदाभकान्ते! सरसी' क. ख. पाठः.

च. (२) भुजगाधिपशयनवरशयितमुरुभासं
भुजराजितरथचरणदरममलहासं
रजनीकरसमवदनमतिमुदितदासं
रतिनायकजनकमृजुमतिहृदयवासं सरसी

(३) करुणाकरममृतमदशमनचणभाषं
कनकोपमवसनमतिरुचिरनिजवेषं
धरणीभारहरमलघुचरितधुतदोषं
तरणिभासुरभूषणमणिलसितदोषं सरसी

गानं—७२. बिलहरी. अटन्त.

प. पाहि सारसनाभ! मामनिशं

अ. देहि ते पदभक्तिं दीनरक्षक! शौरे!
वाहिनीशनन्दिनीवदनाब्जमधुकर!

च. (१) वारिवाहमेचकगात्र!
विकचवारिजातसङ्काशनेत्र!
भारतीशशङ्करमद्रसन्नुतिपात्र!
दारितमधुमुखदानवाखिलगात्र! पाहि

(२) करपङ्कजविधृतशैल!
शरणागतजनतासुरसाल!
उरगवरशयन! परिधृतवनमाल!
करुणावरुणालय! कनकरुचिरचेल! पाहि

(३) कामकोटिसुन्दरमूर्ते!
देव! खण्डितविबुधजनार्ते!
सामजभयहर! सकलसुगुणपूर्ते!
सामोदं मुनिजनसततगीतकीर्ते! पाहि

---

१. 'त्रिपुट।' क. ख. पाठः.

गानं—७३. सावेरि. रूपकम्.

प. पाहि मां श्रीपद्मनाभ! भक्तवत्सल!
पावनतरापदान![1]

अ. वाहिनीशशयन! मे देहि कामितमखिलं पाहि

च. (१) वारणेन्द्रभयहर![2] तनुरुचिविहसितरतिवर! वासवा-
[धिशमन!
चारुकेयूरकङ्कणविलसितभुजयुग! वरगुण! भूरिकृपा-
[जलधे!
नारदादिमुनिमनोवारिजकृतानिलय!
घोरतापत्रयहर! कुन्दमुकुलरदन! पाहि

(२) लोलतरवनमाल! परिजनवरवितरण! लोभनीयभाष!
नीलकुन्तलराजितनिरुपमतरमुखसरसिज! कालकाल-
[सेव्य!
शैलवरेण्यधरण! सारसदलनयन!
भालतलविनिन्दितबालचन्द्र! जनार्दन! पाहि

(३) भूमिभारहरणाजिविदलितमधुमुखदितिसुत![3] पूर्ण-
[मोदरूप!
हेमशोभितवसन! करधृतदरजलरुहगद! कामपाला-
[वरज!
कोमळपल्लवाधर! गोपकामिनीदयित!
श्यामलवारिददेह! स्यानन्दूरपुरवास! पाहि

---

गानं—७४. दर्बार्. झम्प.

प. स्मर मानस! पद्मनाभचरणं

अ. तरुणवारिरुहमदहरणचणममलं स्मर

---

१. 'रवदन!', २. 'रण त' क. ख. पाठः. ३. 'ण! वि' मुद्रितपाठः.

च. (१) सनकशुकनारदादिकलितं कमला-
करसरसीरुहसततपरिमृदितं
विधिशङ्करविनतमातिमृदुलमविरतं
वन्दारुजनसुरतरुकिसलयायितं स्मर

(२) पतगाधिपकरकृतवसनं काळिय-
फणिफणरङ्गरचितशुभनटनं
जलजादिविततावङ्कलसितमतिकमनं
वृन्दावनविरचितशरणम्[1] अघशमनं स्मर

(३) वररत्नमञ्जीरमुखरं नखमणिशि-[2]
शिरकिरणै[3]हताज्ञानतिमिरं सुमनोज्ञ-
मुरलीगानरचिततालचतुरं जननमृति-
हरणैकसिद्धौषधमजरं स्मर

---

गानं—७५. असावेरि. झम्पट.[4]

प. पाहि पङ्कजनाभ! पाहि पङ्कजनाभ!
भासुरजलदाभ! पाहि

अ. मोहनमृदुभाषण! नागवैरिवाहन! वरभूषण! दान्ततर!
देहिनिखिलसमीहितसुघटनाहितकरुण!
देहि शुभममराहितविदलनाहिवरशयन!
[वारिरुहनयन! पाहि

च. (१) करिवरभयहर! कनकरुचिराम्बर!
करधृतदरचक्र! शैलधृतिखण्डितमदशक्र!
चारुतरकरण! परिजनभरण! सुरमुनिशरण!
घनजनिमरणभवभयहरण! कुशलवितरण!
जगदीश! तोषितमहेश! पाहि

---

१. 'णं श', २. 'दिनम', ३. 'णाज्ञा' मुद्रितपाठः. ४ 'त्रिपुट' क. ख, पाठः.

च. (२) तनुरुचिजितमार! तारमौक्तिकहार!
जनितसात्त्वततोष! श्रीकौस्तुभकनदनुपमवेष!
देवदेव! सनकभृगुमुखमुनिवरनिवहविनुतशुभगुण!
वनजसमपद! दिनपरिवृढतुहिनकराक्षियुग!
[विधृतविपुलनग! पाहि

(३) कमलाजीवनायक! कलितशार्ङ्गकार्मुक!
शमितकैटभवीर्य! लोकविश्रुत! जलधिसमगाम्भीर्य!
स्यानन्दूरविमलपुर! पदकमलनतजनशमलहुतवह!
कमलशशधरसमलपन! तिल[1]सुमलसितनास!
[कुन्दसमृदुहास! पाहि

---

गानं--७६. मध्यमावति. आदि.

प. भावये पद्मनाभमिहानिशं
भव्यगुणनिलयं

अ. देवमुनिशरणं दीनजनभरणं
भावुकवितरणं पङ्क[2]जचरणं
पावनाद्भुततरात्मचरित्रं
पापजालघनसालल्लवित्रं
सेवकाशयपयोरुहमित्रं
चिन्मयं नयनजितशतपत्रं भावये

च. (१) हेमविराजितदिव्यकिरीटं
कोमलमृगमदबिन्दुललाटं
भीमसमरभुवि निकृत्तनिशाटं
भूमिभरासुरवह्निकृपीडं
कामिनीजनम[3]नोहररूपं
खण्डिताखिलचराचरतापं
कामदं सुकृतहीनदुरापं
कम्रहारकटकादिकलापं भावये

---

१. 'लकुसुमसमना', २. 'जातच' क. ख. पाठः. ३. 'मोहनरू' क. पाठ.,

च. (२) वारणशोकपयोदसमीरं
वारिदरुचिरतराभशरीरं
मारजनकमम्भोधिगभीरं
मान्यतरसुजनसेव्यमुदारं
श्रीरसारुचिरकेलिविलासं
क्षीरसागरशयं मृदुहासं
घोरघोरभवतापनिरासं
कुन्दानिन्दकरदामलभासं भावये

(३) वासवमुखसुरसन्नुतलीलं
भासुरकनकमदापहचेलं
दासजननिवहकल्पकसालं
तापसमानसकल्पितखेलं
वासरेशशतशोभिरथाङ्गं
भासमानखगराजतुरङ्गं
व्यासवर्णितमहत्त्वमभङ्गं
व्यक्तपूर्णकरुणोद्यदपाङ्गं भावये

---

गानं—७७. मध्यमावति. आदि[1].

प. वनजाक्षं चिन्तयेऽहं

अ. जितदनुजं पर्वतभिदनुजं मुकुन्दं वनजाक्षं

च. (१) विमलतरपार्वणविधुमण्डलसदृशकमनी-
यमुखमनिशममरगन्धर्वाद्यभिनुतमतिनीलं[2]
शातकुम्भोपमितरुचिरचेलं
पदाम्बुजनमनप्रवणपालं पद्मनाभं वन

---

१. 'त्रिपुट' क पाठः. २. 'मनिश' मुद्रितपाठ.

च. (२) कलशभवशौनककमलासनतनयकलित-
मनुपमशमलघनवल्लीदलनशितकुठारं
नानारत्नोज्ज्वलभूषमुदारं
कूपारसाकुलनेत्रमचलधीरं पद्मनाभं वन

(३) करपरिलसदरिकम्बुगदाम्बुजमुरुपुण्य-
भृतलोकपरिभजनीयापरिमितगुणवासं
कन्दर्पसुन्दरतरतनुभासं
स्यानन्दूरपुरकलिताधिवासं श्रीपद्मनाभं वन

---

गानं—७८. मुखारि. चाप्पु.

प. पालय श्रीपद्मनाभ! पालितलोक!

अ. बालचन्द्रमदहरभालशोभिमृगमद! पालय

च. (१) उत्तमपुरुष! विभो! चित्तजजनक! शौरे!
वित्तपुत्रकलत्रेहायत्तजनदुरवाप! पालय

(२) दन्तिराजतापहर! बन्धुरराजीवारुणाधर!
सिन्धुसुताकराम्बुजसन्ततलालितपाद! पालय

(३) देवमुनिगणामेयं तावकीनमहिमानं
जीवलोके को वा स्तोतुं केवलं निपुणायते पालय

---

श्रीपद्मनाभकेशादिपादवर्णनम्।

गानं—७९. मलहरि. झम्प.

प. कलये देवदेवमुरुकारुण्यनिवासं

अ. बलमथनमुखविबुधवन्द्यमानमनिशं कलये

च. (१) विमलमणियुतमकुटविलसिततरशिरसं
सुमवासितकेशभरं सोमबालभालं
कमलबाणचापसमकमनीयचिलियुगलं
रमणीयकुवलयदळराजिनिजनयनं कलये

---

१ 'कूपार्ण ना' क. पाठः.

च. (२) तिलकुसुमविजयपटुदिव्यतमनासिकं
कलितमकरकुण्डलकान्तिदीपितकपोलं
अलघुशोणवरबिम्बफलसुरुचिराधरं
विलसितकुन्दरदनं विशदमन्दहसितं    कलये

(३) अरुणकौस्तुभमणिहारबन्धुरकण्ठ
पुरुकङ्कणलसितपृथुभुजयुगलशालिनं
वरदमतिरुचिरश्रीवत्सविराजितवक्षसं
हरिमखिलजगन्निलयोदरमाश्रितवत्सलं    कलये

(४) चतुराननिलयायितचारुनाभिपुटमजित-
मतिपीतरुचिरवसनावृतघनोरुभागम्
अतिमञ्जुजङ्घायुगमलघुभववारिनिधि-
पतितमन्दरोद्धरणपरकूर्मपदाग्रं    कलये

(५) उरगपरिवृढशयनमुन्निद्रतनुसुषमं
दररथाङ्गशार्ङ्गगदाद्यायुधसंसेवितं
धरणीरमाकान्तमघहरणचणचरित्रं
भरितकरिनायकं श्रीपद्मनाभमाद्यं    कलये

---

गानं—८०. मध्यमावति. त्रिपुट.

प. श्रीपद्मनाभ! कलयितुं त्वां मम
चित्तं परमुत्कण्ठते

अ. तापसमनोमयतामरसनिवसन!
आपन्नाधिनिवहहरण! लोकनायक!    श्री

च. (१) तरुणी विरहातुरा दयितं प्रोषितमिव
सरळभृङ्गमालिका सारसिनीमिव
परभृततितिरिव वरवासन्तिककालं
परम! पिपासुरिव पानीय सुमधुरं    श्री

च. (२) चातकततिरिव जलदमनन्यपरा-
जातगरुतोऽण्डजा जननीमिव विवशा
आतपाकुलो यथा हन्तानातपदेशं
शीतकरं चकोरशिशुरिव दिनमनु श्री

(३) पुरुहेमन्तसमये पूरुष इवावरणं
वरद! भरितोदन्या वत्सा स्तन्यमिव च
जरया पीडितो यथा करतलालम्बदण्डं
सरसिजानन! देव! स्यानन्दूरेश! श्री

---

## अनन्तशयनस्थलपुराणकीर्तनम्.

गानं—८१. मोहनं झम्प.

प. सेवे श्रीपद्मनाभमनिशं

अ. देववरमकुटमणिदीप्तिनीराजितपादं सेवे

च. (१) परमभागवतदिवाकरयतीन्द्रनयनगोचर-
बालरूपधरं सरसिजेक्षण
परिपूजनसालग्रामहरणकुपित-
संयमिकरवारितमदृश्यमथ परमकोमळहसितं सेवे

(२) तदनु शोकभरभरितदण्डिवरगवेषितं
मुदितं मत्स्यतीर्थाञ्चितमोहनोत्तमाङ्गं सदयं
शङ्खचक्रतीर्थसन्निहितनिजबाहुं
विदितधर्माधर्मतीर्थविन्यस्तपादपद्मं सेवे

(३) अतिमहितदशरूपाकलनसुबहुविस्मित-
मुनीन्द्रयाचनया भृतकरुणारसं
यतिवेणुदण्डत्रितयमानसङ्कुचितं
धृतिविलसद्द्वारत्रयपावनविमानाश्रितं सेवे

---

१ 'प्र' क. पाठः

च. (४) तरसा योगिकृतसपर्यं धरणीरमायुतममलं
गरुडकृतनुतिरसिकमुरगशयमीशं
परमपातकहरपद्मतीर्थादिवृतं
सरसमिह स्यानन्दूरजनतापुण्यनिकायं सेवे

(५) वरवञ्चिमार्ताण्डवर्ममहीवलमथन-[1]
परिकल्पितलक्षदीपादिपरमोत्सवमुदितं
चरणपङ्कजैकगतिसाधुलोकपोषणाय
करुणया धृतदीक्षं गळितावधिकालं सेवे

---

४. श्रीनृसिंहकीर्तनानि.

गानं—८२. बिलहरि. चेम्पट.

प. जय सुगुणालय! जय जय हरे! त्रिनयन!
जय श्रीनरसिंह! जय

अ. शशधरकोटिसदृशदीप्ते! दीनशरण्य! श्रीनरसिंह

च. (१) घनभक्तिनिकेतनकयाधूनन्दनवन्द्य! श्रीनरसिंह
(२) मघवद्धलेशालघुतराश्रयानघचारित! श्रीनरसिंह
(३) असदृशमाहिमविलसितविमलमानसहर्म्य! श्रीनरसिंह
(४) अखिलमौलिसुरसुखदायककरनखजाल! श्रीनरसिंह
(५) अनवद्यतपोधनसनकसनन्दनवन्द्य! श्रीनरसिंह
(६) कनककशिपुविदलनचण! कारुण्यनिदान! श्रीनरसिंह
(७) विततकेसराहतजलद! महोन्नतरूप! श्रीनरसिंह
(८) प्रकटबलासुरनिकरातिभयानकरदन! श्रीनरसिंह
(९) दुरिततिमिरभास्कर! कोसलपुरनरनाथ! श्रीनरसिंह

---

गानं—८३. आरभि. अटन्त.

प. नरसिंह! मामव भगवन्! नित्यं

अ. हरविरिञ्चवासवनुतशौर्यसिन्धो!
अतिरभसनिहतासुर! दीनबन्धो! नर

---

१ 'ह्मीपालव' मुद्रितपाठ..

च. (१) कनककशिपुवनदाव!
बोधाकर! देव! महानुभाव!
सनकादिमुनिजनशरण! पवित्र!
जनितारिभयगात्र! सारसनेत्र! नर

(२) विततकेसराहतशरदजाल!
विश्वनायक! भक्तवरद!
अतिमात्रविनयप्रह्लादसामोद-
नतपादामलवेदततिगीतभेद[१]! नर

(३) करधृतशितहेतिजात!
भूरिकलुषवारिदकुलवात!
भरितकृपारस! परिपालितेभ!
परममङ्गलशोभ! पङ्कजनाभ! नर

---

गानं—८४. मोहनम्. रूपकम्.

प. परिपाहि मां नृहरे!

अ सरसिजभवनुत! साधुलोकभयापह! परि

च. (१) शरणागताधिहरण! देवदेवेश! शतमन्युनत-
चरण! वरतापसहृदयवारिजातकलहंस! परि

(२) दनुजनिकरदमन! धन्यकयाधूतनयसङ्कटशमन!
जनितभुवनभीतिकनककशिपुकाल! परि

(३) शमलशलभदीप! भक्तवीक्षणशमितनिस्तुलकोप!
कमलदळनयन! कमलनाभ! सततं परि

---

(४. घ. श्रीकृष्णकीर्तनानि।)

गानं—८५. बिलहरि. चेम्पट[२].

प. स्मर सदा मानस! बालगोपालं

---

१. 'त' क. पाठः २. 'आदिः' क. ख. पाठः.

अ. दुरितमयदारुणगिरिकुलिशं

च. (१) यदुकुलतिलकं यमिजनविनुतं
परमगुणवसतिं वारिधिशयनं स्मर

(२) सरसिजनयनं सामजवरदं
मदनजनकमिह मधुसुरदलनं स्मर

(३) गरुडतुरङ्गं कनकसुचेलं
परमपूरुष श्रीपङ्कजनाभं स्मर

---

गानं—८६. श्रीरागम्. झम्प.

प. भावयामि नन्दकुमारं

अ. भावुकदाननिपुणपादसरोरुहमखिल-
देवमुनिजनविनुतदिव्यसुगुणनिवासं भावयामि

च. (१) मुरलीगानरसिकमतिनीलं
व्रजवनितामोहकमाहतशिशुपालं
तरणिकोटिमदशमनवरकिरीटधरमखिल-
शरणमात्मवदनचारिमविजितसोमं भावयामि

(२) विमलसूमगणसुरभिकेशं
परमदयाविधुतनिजजनभवपाशं
यमुनाकेलिपरममलयादवकुलभूषणं
कमलबाणजनकमतिकान्तं पीतरुचिवसनं भावयामि

(३) अधरजितबिम्बफलशोभं
गलविधृतहारमिह श्रीपद्मनाभं
मधुकैटभमुखदनुजमर्दनचतुरम्
अनघमधरीकृतमौक्तिकहासमुरुभासं भावयामि

---

गानं—८७. कल्याणी. झम्पट.

प. जय जगदीश! नन्दकिशोर!

---

१. 'त' मुद्रितपाठः. २. 'नवरचा' क. पाठः. ३. 'आदिः।' क. ख. पाठः.

अ. नयनविनिन्दितनलिन! जगत्रय-
भयविनिवारणशुभचरित! जय

च. (१) अहिवरकालियफणकृतनर्तन!
हतशकटासुर! विधुवदन! जय

(२) व्रजवनिताजनहृदयहर! मधुर-
वचनरचन! मुनिजनसेव्य! जय

(३) मणिमयभूषणमण्डित! सुरनर-
मान्यचरित! सारसनाभ! जय

---

गानं — ८८. यदुकुलकाम्भोदरी. अटन्त.

प. मोहनमयि! तव मुरळीगानमहो
मोदयति नो कमिह भुवने

अ. देहविजितमार! दिव्यमानुषवेष! मोहन

च. (१) नीरसोऽपि विटपी निशमनेन
तरसा चारुकिसलयितो जायते नव इव
सारङ्गततिरपि शान्तोलपकबळा
नीरजाक्ष! भवति निभृताचित्रगतेव मोहन

(२) मत्तवारणवरमस्तकभेदने
दत्तमतिरपीश! तरसा किल केसरी
चित्तगतमोहेन चिरविस्मृतभावोऽथ
सत्तम! निवसति साधुवत तत्रैव मोहन

(३) परमपुरुष! जडपाषाणनिकरोऽपि
परितो द्रवति हन्त परिकर्णनेन
तरुणीजनमोहकं तदिह समजनीति
परमद्य किमु चित्रं पद्मनाभ! मुरारे! मोहन

---

१. 'त्रिपुट', २. 'सानुमति नि' क ख पाठ ३. 'ब', ४ 'दढपा', ५. 'सामजभीतिहर' मुद्रितपाठः

गानं — ८९. नीलाम्बरी. चेम्पट.

प. कळकण्ठि! कथङ्कारं सखि! विस्मरामि
कपटनाटकसूत्रधारं

अ. अळिकशोभितचारुहरिचन्दनतिलक कळ

च (१) सरसश्रीपादमूलं पीयूषवाणि! सरसगुणालवालं
चारुमुकुरकपोलं सङ्क्वणितवेणुनाळं
गौररुचिरचेलं गळधृतवनमालं कळ

(२) दन्तजितकुन्दजाल विद्युल्लताङ्गि! दान्तजनतानुकूलं
शान्तनवसमयपालं शमिताखिलरिपुजालं
कान्तेन्द्रनीलनील काळिन्दीकेळिलोलं कळ

(३) वृन्दावनकृतलीलं पूर्णेन्दुमुखि! विश्वजनावनशीलं
सन्दळितशिशुपालं सततावृतगोपालं
नन्दिततरकुचेलं नन्दकमनीयबालं कळ

---

गानं -- ९०. ललितपञ्चमं. झम्प.

प. परमपुरुषं हृदय! भावय तं

अ. मुरळीनादविवृततरपरललितपञ्चमं परम

च. (१) देवकीवसुदेवाति[1]दिव्यपुण्यनिचयम म-
रावननिरतमजितमम्बुदाकृतिं
पावनतरणितनयोपान्तविरचितलीलं
सेवकाभीष्टदायकं सितदशनभासुरं परम

(२) गोपवनिताहृदयतापहरमतिमधुरा-
लापमवनीभारभूपमर्दनं
श्रीपतिममलयोगिचिन्त्यपदयुगळमखि-
लापदुद्धरणपटुमब्जभववन्दितं परम

(३) समरजितदानवं सकललोकनतमखिल
शमलेहतिचणसरसचरितमक्षयं

---

१. 'दि' क. ख. पाठः

कमलदळनिभनयन। कलितकरुणारसं
कमलनाभममितभवगदशमनकारणं परमे

---

गानं—९१. कर्नाट चाप्पु.

प. कलयामि हृदि नन्दकमनीयबालं

अ. जलजासनविनतचरणवारिरुहैमाद्यं कलयामि

च (१) यामुनपुळिनविहारिणं व्रज-
यौवतसम्मदकारिणं
कोमळवनदामधारिणं बहु-
गोपवृन्दवृतमम्बुरुहाक्षं कलयामि

(२) देवमौलिपरितोषणं वर-
देहपरिलसितभूषणं
भावहर्षिमृदुभाषणं रिपु-
दावदवमतिमेचकभासं कलयामि

(३) सोमवंशदिव्यमण्डनं विधु-
सुमुखमखिलपापखण्डनं
भौमदानवचण्डदण्डनं श्री-
पद्मनाभममलाशयसेव्यं कलयामि

---

गानं—९२. नवरसम्. अटन्त.

प. सेवे नन्दनन्दनं सततं

अ. पावनयमुनातटावासं मुरहरं सेवे

च. (१) शीतकरसन्निभवदनं विधि-
चित्तजजनकं कुन्दकुड्मळरदनं
वीतमोहहृदयसदनं परिवीत-
पीतवसनं हृतसुरकदनं सेवे

---

१. 'न भासुर प', २ 'मि न'; ३. 'हं कल' क ख. पाठः. ४. 'विल',
५. 'कं कल', ६ 'म', ७. 'यं पल' क, पाठः. ८. 'त्रिपुट' क. ख. पाठः.

च. (२) दूरितसेवकैकदनं विधु-
द्युमणिकलितनेत्रं पदजितकमलं
घोरदैत्यदहनममलं नील-
कुटिलकुन्तळराजिमुखमतिविमलं सेवे

(३) नीरदसमरुचिकरणं धरणी-
भरतिमिरसमूहतिग्मकिरणं
नारदादिमुनीन्द्रशरणं पद्म-
नाभमखिललोकतापपरिहरणं सेवे

---

गानं—९३. भैरवी. चेम्पट.[2]

प. पालय देवदेव ! गोपाल ! रामसोदरयुत !

अ. शैलारिसुताभयद ! सत्यभामासहित ! मां पालय

च. (१) पवनजसन्नतनिजपादाक्रूरहित ! गुण-
भवन ! कौशिकाद्दतानुभाव !
भुवनपालनैकलोल ! पूरितभीष्मसमय !
विविधभक्तजनतापविदळनोद्धवसंयुत ! पालय

(२) पूतनामारण ! श्रुतैबोधाकर ! हरिवंश-
जात ! पालितविबुधजात !
सातकर ! यशोदयासाधुसमलङ्कृत ! सनातन !
धृतकलाप ! नागारिभासिगमन ! पालय

(३) वारिधिमदभञ्जनवरदेहरुचे ! रिपु-
वारणकलितवनवास !
सारङ्गसद्गतिप्रद ! सर्वलोकशुभकर !
शूरजातपर ! स्मरसुन्दर ! श्रीपद्मनाभ ! पालय

---

१. 'ककश्मल वि' मुद्रितपाठः. २ 'आदिः', ३. 'ति' क. ख. पाठः, ४. 'सद्गुव' क, ख. पाठः. ५. 'सू' मुद्रितपाठ..

गानं — ९४. कामोदरी. चेम्पट.

प. रासविलासलोलो लसति भवान् देव!

अ. भासुरकालिन्दीपरिसरे मधुवने — रास

च. (१) केशभारनिबद्धकेकिबर्हो निकामं
पेशलमणिभूषपीतवसनशाली
नाशयन्निह कुसुमाशुगमदं[1] तनुकान्त्या
केशव! मृदुविलसद्वदनो मुनिगेयकीर्ति-
रमलमूर्तिरतिपावनो जगति — रास

(२) मदनातुरगोपिकामण्डलमध्यगतो
मुदमनुपमं तासां मुरळीरवेण दिशन्
तदतुलगानमुदितलोलमौलिरिह
पदयुगविलसन्नवमणिनूपुरभव्यनाद-
विजितहंसनिनदो रमारमण! — रास

(३) विविधनर्मालापनवीटीदानचुम्बन-
प्रविततभुजाश्लेषादिविलासशतैरहो
विवशयन्नमुं यदुवीर! गोपीसञ्चयं
दिवि समुपागतनिर्जरसन्नुत! दिव्यशोभ!
जलजनाभ! शरणागताधिहर! — रास

---

गानं—९५. मोहनं. चेम्पट.

प. मोहनं तव वपुरयि मुरहर!
मामके हृदि विलसतु समधिक-
मोदकारणमम्बुजनाभ! विभो!

अ. देहराजितवरहरिचन्दन!
भूरमावदनाम्बुजमधुकर![2]
वाहिनीशगभीर! मुरान्तक!
सेवकाखिलशोकनिवारण! — मोहनं

---

१. 'दं का' मुद्रितपाठः. २. 'वदनाम्बुजसे' मुद्रितपाठः म. पाठश्च.

च. (१) पावनसुचरित! पङ्कजसुनयन!
श्रीविजितमदन! शीतकरवदन!
देव! मधुकैटभघनवनदाव! पटुकालियमर्दन!
देवदनुजविद्याधरसंसेवित!
दीनजननिकरकल्पकभूरुह! मोहनं

(२) गोपनिवहयुन! कोमळतमहस!
कोपहतशकटघोरदितिज!
धुतपाप! हृतसर्वचराचरताप! बलदेवसहोदर
भूपतिलकधर्मात्मजसुखकर!
भूमीविहितभरनाशन! यदुवर! मोहनं

(३) नीलसुषम! भुवनेश! करविधृतशैल!
निहतशिशुपाल! कनकनिभचेल!
घनसारतिलकितनिटिल! मधुरालपनामल!
कालविमतदेवाधिपसन्नुत!
कामजनक! कलिदोषहरणपर! मोहनं

---

गानं—९६ अठाण. रूपकम्.

प. सारसायतलोचन! पाल्य मामरविटपिवर-
चारुकिसलयसुलळितपदयुगळ!

अ. मारकोटिमनोहर! गिरिधर!
मारमण! सुरनायकसोदर! सारसा

च. (१) पादनखहिमकररुचिविदुलित-
भवनिरुपमतमघनगदतिमिर!
वेदान्तागमवेद्य! मुरान्तक!
वेणुरवरसिकातिमनोहर! सारसा

(२) पीतरुचिविमलवसन! यदुवर!
बिम्बफलमदहृतिपरिलसदधर!

---

१. 'रसे', २. 'म' मुद्रितपाठो घ. पाठश्च. ३. 'निवह! वे' मुद्रितपाठः.

पाताशेषजनामलतरगुण!
भानुशशधरलोचन! मोहन! सारसा

च. (३) नन्दकृतसुचरितकुल! जलरुह-
नाभ! कुरु मम गदहृतिमयि भगवन्!
कुन्दकुड्मलभासुरवररद!
गोपतनुधर! कालियमर्दन! सारसा

---

गानं—९७. बिलहरी. रूपकम्.

प. गोपालं सेवेऽहं

अ. पापनिकरनाशनं गोपालं सेवेऽहम्

च. (१) लोकेशं विकसितशरदिजजलरुहसमरुचिलोचनं
नाकेशनुतमङ्घ्रिनतजनभवभयहरमिह गोपा

(२) कालिन्दीतटकृतविहरणमतिमृदुहसमुरुकामदं
कालियमदहरं कमलजनतपदमयि गोपा

(३) धीरं[२] तं सुमविशिखसदृशनिजतनुनिरुपमदीधितिं
सारसनाभमतिसरभसदितिसुतहरमनन्तं[३] गोपा

---

श्रीकृष्णावतारकीर्तनम्।

गानं—९८. कुरिञ्चि[४]. झम्प.

नन्दसुत! तव जननमिन्दुकुले जगदीश!
नन्दयति जगदखिलमिन्दिराधरेश! नन्द १

मन्दमन्दमनुगर्जति[५] मांसलघनेऽपि[६] देवा-
नन्दरूप! परमहंसनत! महानुभाव! नन्द २

महिताष्टमीरोहिणीसहितदिवसनिशीथे
विहितनिद्रे[७] खलकंसप्रहितभटयूथे नन्द ३

---

१. 'धनुर्धर', २. 'शं', ३. 'मनु गो' मुद्रितपाठः. ४ 'नवरस झ' क. ख. पाठः. ५. 'च्छ' मुद्रितपाठः. ६. 'नो', ७. 'द्राविले॰' क. ख. पाठः.

विमलशीतसलिलासु विलसन्तीषु तटिनीषु
कुसुदामोदवति वायौ भ्रमति दिग्मन्तेषु नन्द ४

देवनिकरे वियति दिव्यसूनमभिवर्षति
पावनतापसजाले परमनुहृष्यति नन्द ५

देवकीसहितवसुदेवे नीरधरशोभ!
केवलं संस्तुवति मुदा केशवाब्जनाभ! नन्द ६

---

गानं—९९. देवगान्धारं. झम्प.

प. जय जय रमारमण! जागृहि विभो!

अ. देव! नभोमणिरिह दीधितिगणैरिदानी-
मेव नाशयति निबिडतिमिरजालं
तावकपादाम्बुरुहदर्शनमखिलजन-
भवतापसमुदयं विदळयति यथा जय जय

च. (१) मधुरवेणुरवसुधया मदनजनक! तरसा
विधुरतामपोह्य नो विश्वबन्धो!
मधुमुरादिदनुजकुलनिधनतोषितसमवि-
बुधनिवह! वसुदेवसुकृतराशे! जय जय

(२) तरुणगोपवधूकलितदधिमथनसमये
कराभरणमृदुशिञ्जितं मुखरयति घोषं
मरकतरुचिशकलमवहरणपरमप्रद्यु-
तरशरीरनवसुषम! यदुवतंस! जय जय

(३) मीनकूर्ममहितकिटिवरनरहरिवामना-
न्यूनभृगुसुतरामरामराम!
भानुसुताप्रिय! मुकुन्द! आविष्कल्किवररूप!
दीनपालनपर! श्रीपद्मनाभ! जय जय

---

१, 'क्रे ननु', २. 'त' क. ख. पाठः.

भागवतसारकीर्तनम् ।

गानं—१००. पुन्नागवराळी. झम्प.

प. भावये श्रीगोपालं
भवविनुतभव्यसुगुणालवालम्

अ. देवराजमुखविबुधसेव्यपादपङ्कजं
दितितनूजघनविपिनदावं देवं भावये

च. (१) विदितयदुवंशप्रदीपं
वसुदेववेशितयशोदासमीपं
पूतनाविदळनविधुतसुजनतापं
गर्गमुनिविहितमधुरनामालापं
गोपिकासदनकृतनवनीतलोपं
मातृनिजवदनदर्शितभुवनरूपं
श्रीकृष्णं सदयहृतधनदसुतशापं सुकलापं
सङ्गतयमुनाविमलापं गोपं भावये

(२) परमघातुकाघकालं वत्सहृति-
परिचकितविधिविनुतलीलं
पदमृदिततरकाळियविनतपादमूलं
काळिन्दीतटहृतपशुपवधूचेलं
मृदुलतरकरधृतगोवर्धनशैलम्
आभीरकमनीरासकेळिलोलं
श्रीकृष्णं परमहंसहृदयाब्जखेलं शुभशीलं
पाटितवृषादिरिपुजालं नीलं भावये

(३) दनुतनयकेशिकृतान्तं
गान्दिनीतनुजोदितकंसस्वान्तं
सङ्गतजननिबिडमधुरोपान्तं
सैरन्ध्रीतनुसुभगीकरकरान्तं

---

१. 'नीयरा' क ख पा.

सरभसमनुजकुलमिळितकंसान्तं
सान्दीपनिमुनिविदितशास्त्रकृतान्तं[1]
श्रीकृष्णं विनतोद्धवलसितसभान्तं
भूकान्तं वीरजरासुतजयभान्तं शान्तं — भावये

च. (४) कलितद्वारकापुरनिवेशं
भीष्मपुत्रिकाद्यष्टवधूजीवेशं
निजविरहाकुलगोपवधूशोकनाशं
विरचितकुन्तीसुतज्ञानोपदेशं
दारिद्र्याविलकुचेलदत्तधनकोशं
मृततनयकुलदानपूरितद्विजाशं
श्रीकृष्णं बलदेवानुजमसितकेशं
लोकेशं पद्मनाभमम्बुदनिकाशं श्रीशं — भावये

---

## (४. ङ. श्रीरामकीर्तनानि ।)

गानं—१०१. वेगट. अटन्त[3].

प. कलयामि रघुरामं भूपललामं[3]

अ. नीलोत्पलसन्निभगात्रं परमपवित्रं — कलयामि

च. (१) धनदानुजघनवनदहनं तप्त-
कनकनिभवसनं वनजाक्षं
सनकादिमुनिविनुतशुभचरितं
मनसिजरूपम् अनवद्यम् — कलयामि

(२) करुणावारिनिधिं चरणनळिनपूत-
वरतापसमहिळं सुरपालं
कुरुविन्दनिभरदं परमपुरुषमिह
धरणिनन्दिनीकेलिपरमीशं — कलयामि

---

१ 'नु' क. ख पाठः २. 'त्रिपुट'. ३ 'भूतलल' क. पाठ..

च. (३) द्युमणिकुलतिलकं विमलगुणं सर्व-
शमलहरणचणं रमणीयं
कुमुदैकबान्धवसमवदनं श्री-
कमलनाभं घनशोभं                कलयामि

---

गानं—१०२. भूपाळं. रूपकम्.

प. राम! राम! पाहि राम!

अ. कामकामनीयकाङ्ग! हेमाम्बर! मुखविहसित-
सोम! सोमावितुन्न! नृपललाम! महितकान्तिसीम! राम

च. (१) सेवकजनसमवरद! सीतावर! सुखकरद-
रावलोक! घनशरदरम्यकेश! वरद!
भूवलयाधिप! करदभूप! गमजितद्विरद!
भावसकलगदहरदयाविलास! रुचिररद!        राम

(२) काननविरचितचरण! कञ्जताम्रतरचरण!
सूनहारशुभकरण! सूर्यकुलाभरण!
दानवकुलमदहरण! दीनदीनजनशरण!
मौनिकल्पितस्मरण! माननीयमहितरण!        राम

(३) पालितकौशिकसवन! पद्मनाभ! मरुद्वन!
शैलवैरिकृतनवन! शान्तसागरवन!
नीलगात्र! गुणभवन! नीतिहीनघनपवन!
सालभेदकृतजवन! सरोजाक्ष! भृतभुवन!        राम

---

गानं—१०३. मध्यमावती. झम्पट.

प. कोसलेन्द्र! मामवामितगुणानिवास! भगवन्!

अ. भासमानमहामणिमण्डपपरिविलसितसिंहासन-
[राजित! कोस

---

१. 'त । नीसरिसरिमारिमपानिपमापससनिपरिपनीपामारिमरिस । नीरजशर-
भासमपावनमापरिलसित! कृपानिकामभृतरस!। कोस' क. ख. पाठ..

च. (१) बाहुधृतशरचाप! धुतभक्तजनाखिलताप!
आहवाहतविमताटोप! हारमकुटकेयूरकलाप! कोस

(२) जानकीलसिताङ्क! जलजारय! विनाशितलङ्क!
भानुवंशपयोधिशशाङ्क! पादविहृतमुनितरुणी-
[पङ्क! कोस

(३) नीलजलधरगात्र! धृतनीलनलारुणपुत्र!
भाललोचनमुखनुतिपात्र! पवनसुतकलितचारु-
[चरित्र! कोस

---

गानं—१०४. शहान. अटन्त.

प. जय जय रघुराम! निहतनिशाचर! सत्यकाम!

अ. नयनजितकमल! नामदूरितमल! मयि दयां कुरु
महिततरमणिमयविभूषण! मनुकुलोत्तम! जय जय

च. (१) दिनकरतनयपाल! सेवकपवनज! हाटकचेल!
घनसाराङ्कितभाल! कौसलेय![2] सुशील!
जनितनतजनसकलशुभगुण!
सनकमुखमुनिशरण! निरुपम! जय जय

(२) वारिधिमदविदार! पूर्णचन्द्रवदन! विमलहार!
मारसमाकार! महीधरातिगम्भीर!
सारसोद्भवसन्नुताहव!
चारुतरहास! जानकीवर! जय जय

(३) साकेतपुरभूप! पङ्कजनाभ! समरदर्शितकोप!
नाकनायकतापनाशनाद्भुतरूप!
श्रीकराखिलसेव्य! मम पर-
माकलय शुभमाशु दिनमनु जय जय

---

१. 'भङ्ग।', २. 'ल्ये' मुद्रितपाठः.

गानं—१०५. भैरवी. आदिताळः.

प. रघुकुलतिलकमयि भजानिशमिह रामचन्द्रममलम्

अ. अघहरणचतुरचरणयुगलम्[1]
अमलममितगुणं लोकनिकरशरणं रघु

च. (१) रामं निजतनुरुचिविहसितकामं परिपूरितनतजनकामं
मुखनिन्दितपार्वणसोमं सुललामं भृगु-
रामगर्वहारिणमुरुमौक्तिकदामलसितमरिसमुदयभीमं रघु

(२) नीलं कनकरुचिमदहरणचेलं परिजनपवनजनळनीलम्
असिताळकपरिवृतभालं सुकपोलं सुर-
जालखेदनाशनपटुतममतिवेलविवशजनसमुदयपालं रघु

(३) भूपं करतलविलसितशरचापं घनसङ्गरदर्शितकोपं
सनकादिहृदालयदीपं धुतपापं क[2]म-
लाभमब्जनाभमकृतसुकृतदुरापम् ईक्षणहृताश्रिततापं रघु

---

गानं—१०६. भैरवी. चेम्पट.

प. रामराम! गुणकुसुमाराम! राम-
णीयकाभिराम! रामराम

अ. दीनपालन! निर्जितपरशुराम! रमाबिम्बोकालय! रामराम

च. (१) राजराजवन्द्यचरणाम्भोज! भो ज-
गत्त्रयाधार! राजराजमान्येषुचाप!
विक्रमभासुराजराजसन्तानदीप! रामराम

(२) तारतारासुतकृतोपचार! चार-
विदितलोकाचार! चारण[3]सेवित!
विदळितभूभार! भारतीशभावित! रामराम

(३) कालकालाद्दत! सीतामहेलाहेला-
श्रय! विशिखवातूलतूलायितदूषण!
सुजनविहारसालसाल! विगतदूषण! रामराम

---

१. 'गम्' क. पाठ.. २. 'सकलाभ', ३ 'णाभिसे' क. ख. पाठ.,

च. (४) लोकालोकातीतगुणविपाक! पाका-
हितपूजित! लोकालोकमुनिमानित!
परिहृतभवशोकाशोकवनहृतसीत! रामराम

(५) भानुभानुसमतेजोभुजानुजानु-
कूल! प्लवगानुगानुसृतसुग्रीव!
कौसल्यानन्दनानूनानुपमवैभव! रामराम

(६) भावभावालय! महानुभाव! भाव-
यामि वैरिदावदाव! लोकनायक!
घनगम्भीररावरावणसंहारक! रामराम

(७) सारसारणादिकसंहार! हार-
शोभित! सनीरनीरदसदृशाभ!
भूषारत्नांशुशारशार! श्रीपद्मनाभ! रामराम

---

गानं—१०७ देवगान्धारी. रूपकम्.

प. रामराम! पाहि वारिवाहश्याम!

अ. भूमिभरकदनहर! हे बोधाकर! राघव! रामराम

च. (१) मदनविमतवरकार्मुकविदलनविश्रुतभूरिदभार्गव-
गर्वशमन! सदयानन्दितलोक! रामराम

(२) कनकहरिणरूपसमागतमारीचविभञ्जन! दयिता-
हररावणघनवातानुपमेय! रामराम

(३) सूर्यतनयपवनात्मजशोभितपार्श्व! जगन्नुत-
वीर्यनिलय! पद्मनाभ! वेदवेद्य! सततं रामराम

---

गानं—१०८. सारङ्गम्. त्रिपुट.

प. पालय रघुनायक! वैरिमण्डलपाटनपटुसायक!

अ. भालनयनसेव्य! पङ्कजातवदन! नीलवारिददेह!
[नित्यानन्द! हाटक-

---

१. 'नुश्रित' मुद्रितपाठः. २. 'पूजितभा' क. ख. पाठः.

चेल! वरगुणजाल! नवमणिमाल! सुहृदनुकूल! निरु-
पम! पालय

च. (१) वीरकपिपरिवार! सङ्गराङ्गणविजितरावण! गम्भीर-
वारणेन्द्रगमन! वारिताम्बुधिगर्व!
मारसदृशाकार! मान्यमुनितोषण!
घोरभुजबलदारितपरम-
धीरमघवकुमार! मृदुहस! पालय

(२) भीमकार्मुकविभङ्ग! निस्तुलबाणभिन्नकनकसारङ्ग!
कामदायक! सीताकान्त! जगन्नुत!
रामणीयकावास! रात्रिञ्चरभीषण!
राम! भूपतिललाम! जितभृगु-
राम! रविकुलसोम! पटुतम! पालय

(३) कुन्दसमरदशोभ! नेत्रजितारविन्द! पङ्कजनाभ!
सिन्दूरारुणाधर! श्रीसाकेतनिलय!
मन्दारतरुवरनिन्दकवितरण!
इन्दुमुख! सुरवृन्दपरिणुत!
चन्दनरचितसुन्दरतिलक! पालय

---

गानं — १०९. भैरवी. चेम्पट.

प. वसुन्धरातनयाधव! पालय
वासवादिनतपाद! कृपालय!

अ. वसानिशं मम हृदि जगदीश्वर!
वैरिजालहरचापविशिखधर! वसु

च. (१) हेमचारुरुचिमदहरनिरुपमचेल!
हितसज्जनसमुदयपाल!
दशकण्ठविनाशन! कामकोटिसुन्दर! पदनतजन-
कामदायककटाक्षनिरीक्षण!
हिमकरसमरुचिवदनपरिलसित! वसु

च. (२) वीरकीशगणपरिवृत ! दुरितनिरास !
विदितामलगुण ! मृदुहास !
मनुवंशविभूषण ! पारिजातसुमवासितकचभर !
शारदाम्बुरुहनेत्रयुगामल !
दिनकरसुतभयहर ! हरपरिणुत ! वसु

(३) नीलकान्तिघनविजयचणाद्भुतदेह !
नृवराहिसमालघुबाहु !
जितभार्गव ! मोहनभाललालसितसुन्दरमृगमद !
पद्मनाभ ! पुरुषोत्तम ! जय जय !
कुरु मम शुभमयि दिनमनु रघुवर ! वसु

---

गानं — ११०. तोटी. आदितालः.

प. श्रीरामचन्द्र ! दिश मम शुभमतिमयि कारुण्यसान्द्र !
अ. नाराचचापशोभिनिजकर !
धीरोदारसुगुणनिवसन !
सारामेय ! विनतसुरगण ! श्रीराम

च. (१) राम ! घननिशिचरनिकरविराम !
निजमुखरुचिविहसितसोम !
नरवरकुलमहितललाम !
रविवंशविभूषण ! सामजाधिपसमानयान ! वर !
जानकीरमण ! मौनिजनावन ! श्रीराम

(२) नीलनळपवनजमुखकपिजाल-
परिवृत ! शुभतमनिजलील !
वितरणहृतमदसुरसाल !
कनकोपमिताम्बर ! कालकालवरचापविभञ्जन !
कम्बुकण्ठ ! मणिहारविराजित ! श्रीराम

(३) केशजितजलधर ! समभुवनेश !
पदसरसिजविनतसुरेश !
हृतनतजनघनभवपाश !

अप्रतिमामितविक्रमनाशिताखिलमलाजित! पङ्कज-
नाभ! चारुसरसीरुहलोचन! श्रीराम

---

गानं—१११. केदारगौळं. चेम्पट.

प. राम! परिपालय माम् अयि भीमनिशिचरविदलन!
जगदीश!

अ. कामाधिकसुन्दर! नतजनकामितवितरणलोलुप! राम!

च. (१) वायुसूनुकरलालितपदयुग! वारिजातरुचिहारि-
[वदन! निर-
पाय! हेममृगखण्डन! सुललितभालशोभि-
घनसारतिलकवर! राम!

(२) वारिराशिमदनाशनपटुशर! वासवाश्मकमनीयसुषम!
चारुरत्नयुतहेममकुटधर! जानकीहृदयमोहन!
[मृदुहस! राम!

(३) साधुजालसकलाधिहरणचण! सार्वभौम! सुर-
मौनिविनुतगुण!
बाधिताखिलमलाम्बुजसुनयन! पद्मनाभ! सम-
मङ्गळवितरण! राम

---

गानं—११२. धनाशि (धन्यासि) रूपकम्.

प. कलयामि श्रीरामं

अ. खलदानवनाशनं कार्मुकशरधरं
वलभिदुपलनीलं वारिजातनयनं कलयामि

च. (१) शरणागतभरणं जनकसुताजानिममितकरुणं
हरिवीरावृतोपान्तमम्बुधिमदहर-
मरुणबिम्बविराजदधरं जनेशं
दारितदारुणरावणमतिमृदुतरहसमहमिह कलयामि

(२) कमनीयतररूपं जलधिसमगाम्भीर्यमुरुप्रतापं
विमलयोगिमानसविहितनिजवसति-

ममरनिकरतापशमनपरायणं
सामजपुङ्गवचारिमहृतिचणनिजगतिमहमिह  कलयामि
च. (३) नतभवगदहारिणं सरसीरुहनाभममलहारिणं
शतमन्युमुखनुतसङ्गरमनुजसंयुत-
मात्मनिरीक्षणहृतपापसमुदायम्
आतुरसाधुजनावनपटुतमगुणगणमहमिह  कलयामि

---

गानं—११३.  मध्यमावति.  झम्प.

प.  ध्यायामि श्रीरघुराममनिशं लोकाभिरामं
अ.  तोयरुहदळायतामेयकृपाभृतनयनं  ध्यायामि
च. (१) जनकसुताकलितवामभागं वरसुमित्रा-
तनयनुतं हतभवरोगं
निशिचरदळनचतुरभुजजिताहिभोगं
मृदुलधीरलसितयानहसितमत्तनागं
मुदिततरजनकवाक्यपरिपालं साकेतपुरमहीपं
मनुजरूपधरममलं मनुवंशतिलकमिह  ध्यायामि
(२) करकलितविनुतभवमूलं वरमणिनि-
करशोभिताननकलापं
भरतपरिवीजितचामरकलापं पवनसुत-
करलाळितपादममृतालापं श्रीकोसल-
पुरनिलयनिखिलजनपूर्णानन्दकरमिन्द्रादि-
सुरवर्षितकुसुमचयमरुणकोटिसमदीधितिं  ध्यायामि
(३) यमिवरवसिष्ठादिविनुतं कुमुद-
शरभादिकपियूथपरिवृतं
निशिचराग्र्यतमविभीषणभूरिविनुतं
धर्मानपेतमतिमतिधीरमविरतं
सुजनकुलविमतदशमुखमर्दनं वीरलक्ष्मीविलासं
समरभीमतरमिह श्रीसारसनाभममलं  ध्यायामि

---

१. 'तादिप' मुद्रितपाठः.  २. 'दमीवरवि' क. पाठः.

## रामायणकीर्तनम् १.

गानं—११४. सावेरी. चेम्पट.

प. भावयामि रघुरामं भव्यसुगुणारामं
अ. भावुकवितरणपरापाङ्ग[1]लीलालसितं भावयामि

### बालकाण्डम्.

च. (१) दिनकरान्वयतिलकं दिव्यगाधिसुतसवना-
वनरचितसुबाहुमुखवधमहल्यापावनम्
अनघमीशचापभङ्गं जनकसुताप्राणेशं
घनकुपितभृगुरामगर्वहरमितसाकेतं भावयामि

### अयोध्याकाण्डम्.

(२) विहताभिषेकमथ विपिनगतमार्यवाचा
सहितसीतासौमित्रिं शान्ततमशीलं[2]
गुहनिलयगतं चित्रकूटागतभरतदत्त-
महितरत्नमयपादुकं मदनसुन्दराङ्गं भावयामि

### आरण्यकाण्डम्.

(३) विततदण्डकारण्यगतविराधदलनं
सुचरितघटजदत्तानुपमितवैष्णवास्त्रं
पतगवरजटायुनुतं पञ्चवटीविहितावासम्
अतिघोरशूर्पणखावचनागतखरादिहरं भावयामि

### किष्किन्धाकाण्डम्.

(४) कनकमृगरूपधरखलमारीचहरमिह सु-
जनविमतदशास्यहृतजनकजान्वेषणम्
अनघं पम्पातीरसङ्गताञ्जनेयनभोमणि-
तनुजसख्यकरं बालितनुदळनमीशं भावयामि

---

१. 'ञ्जलाल', २. 'ल' क. पाठ.

सुन्दरकाण्डम्.

च. (५) वानरोत्तमसहितवायुसूनुकरार्पित-
भानुशतभास्वरभव्यरत्नाङ्गुलीयं
तेन पुनरानीतान्यूनचूडामणिदर्शनं
श्रीनिधिमुदधितीरे[1] श्रितविभीषणमिळितं भावयामि

युद्धकाण्डम्.

(६) कलितवरसेतुबन्धं खलनिस्सीमपिशिताशन-
दलनमुरुदशकण्ठविदारणमतिधीरं
ज्वलनपूतजनकसुतासहितं यातसाकेतं
विलसितपट्टाभिषेकं विश्वपालं पद्मनाभं भावयामि

---

रामायणकीर्तनम् २.

गानं — ११५. कल्याणी. अटन्त.

प. योजय पदनलिनेन मे मतिं विभो! जय
रघुवीर!

अ. श्रीजितमनसिज! मथितसुबाहो!
श्रितदत्ताभयदक्षिणबाहो! योजय

च. (१) महिळाललामश्रीकौसल्याकलितमरकततुलाकोटि-
मधुपकुलेन
महनीयदशरथमहाराजोत्सङ्गमण्डनोचित-
बाल्यकेलिकेन
बहलरागोज्ज्वलविद्रुमविजयप्रवीणमृदुलाङ्गुलि-
दलविलसितेन
बहुमहिमोन्नतिसंसूचनपटुबन्धुरारि-
दराङ्कुशाङ्कित(पाणि ?)तलेन योजय

(२) सवनसंत्वरमाणकौशिकतापससहगमन-
पुनरुक्तरक्तभरेण

---

१. 'रा' मुद्रितपाठः.

हवविधिविनिहतिचतुरमारीचनीचाहवोचित-
लाघवप्रणयेन
पविधारखण्डितचरितगौतमापातपातकौ-
घतमोनिवहमिहिरेण
भवकार्मुकलतिकारोपणकेलिभासुराङ्गुष्ठा-
नमितवसुधेन योजय

च. (३) परिणयसमयविदेहमहीपतिपाणिपुटपरि-
स्रुतजलधौतेन
परिसरगतनतवदनवैदेहीदृक्पद्मदलकलि-
तार्चनोज्ज्वलितेन
परुषितभृगुसुतमुनिवृषभाभिमुखपतनकला-
निकृन्तशक्तिधरेण
परिजनमेदुरकोसलपुरपरिपावनोप-
लसत्पलाशभरेण योजय

(४) जनकवाक्यगौरवसेवितजनस्थानजनितगिरि-
तरुवीरुदुटजतटेन
जनकनृपालसुताहृदयङ्गमजातरूपकुरङ्गकानु-
गतेन
घनतरदुन्दुभिकरङ्कविक्षेपणघटिततरणि-
तनूजविश्वसितेन
घनभूरिबलबालिदलनायोद्भिन्नघनतलद्रुम-
मूलतलनिहितेन योजय

(५) शरणागतनतसाधुविभीषणशाश्वतिक-
सम्पत्प्रदानपरेण
परमभागवतप्रभञ्जननन्दनपाणिपल्लवयुगल-
परिमृदितेन
शरपतनचकितवरुणोपदीकृतशातनवमणि-
दीधितिस्नपितेन
सरभसकपिभटघटितसेतुवरसाधितोरु-
सुवेलगिरिकटकेन योजय

च. (६) परिपाटितरावणकण्ठाटवीपातिशोणित-
पङ्ककलङ्कितेन
परिचरणविरहदूनसीताकरपरमसुखसं-
घटनपटिमवहेन
भरतप्रत्यर्पितमणिमयपादुकभासमानमयूख-
मयकवचेन
चिरविरहातुरसाकेतजनतप्तचित्तशल्य-
समुद्धरणचतुरेण योजय
(७) सुरततिमकुटविराजितसुरद्रुमसुरभिकुसुम-
धूलीपरिमलितेन
सुरुचिरतनुसुप्रतीकमदावलसुन्दरक्रमभङ्गि-
हरणचणेन
तरणिकुलोचित(राते ? तर)सिंहासनतलकलित-
तलिमाङ्कमधिशयितेन
परमतपोधनमण्डलमानसपङ्कजाले-
विहारिकलहंसेन योजय

---

## आञ्जनेयकीर्तनम् ।

गानं—११६. सावेरी. चेम्पट.

प. आञ्जनेय ! रघुरामदूत ! महितानुभाव ! पाहि
अ. कुञ्जरवरेण्यायुतसत्त्व !
सुरञ्जितामरमुनीश्वर ! सन्ततम् आञ्ज
च. (१) दिनकरभीकरशैशवलील !
दीप्तिविनिर्जितकाञ्चनशैल !
घनदशकन्धरसोदरशूलखण्डनशुभलील !
जनकसुताधिविमोचनलोल !
जम्बुमालिखलनिशिचरकाल !
वनधितरणचण ! निजलाङ्गूल-
वह्निदग्धलङ्कानगर ! आञ्ज

च. (२) परमभयानकसङ्गरधीर!
प्रबलजवयुत! समीरकुमार!
करतलघातहताक्षकुमार! कपिवरकुलशूर!
सुरनरकिन्नरनुतगुणवार!
सूर्यगृहीतपदागमसार!
सरसकदलीविपिनविहार!
चण्डसिंहिकादलनानुवारम् आञ्ज

(३) विमलमहौषधिशैलानयन!
विश्रुतवीर्य! सुपाटलनयन!
दमितवीरयूपाक्षसंहनन! दलिताशोकवन!
विमतकम्पनकाननदहन!
विकटमुष्टिमूर्छितदशवदन!
कमलनाभशुभचरितनिशमन-
कलितमोदभर! सादरमनुदिनम् आञ्ज

---

दशावतारकीर्तनम्।

रागमाला।

गानं — ११७. मोहनम्. अटन्त.

च. (१) कमलजास्य! हृतनिगमराशिहयग्रीव-
दमन! मीनशरीर! मामवोदार! कमल

बिलहरी

(२) धृतमन्दरभूधर! दिव्यकूर्मरूप!
पीतसुधामोदितविबुधजात! कमल

धनाशि.

(३) घोरहिरण्याक्षदारण! सूकरा-
कार! वसुधाधार! जगदाधार! कमल

---

१. 'रभस' मुद्रितपाठ.

सारङ्गम्.

च. (४) प्रह्लादावनोपात्तप्रतिभयनृहरिरूप !
प्रह्लादितसज्जन ! दैत्यनिधन ! कमल

मध्यमावती.

(५) कलितवामनरूप ! खण्डितोद्धतमहा-
बलिगर्वजाल ! सुगुणपाल ! कमल

अठाण.

(६) शितधारकुठाररञ्जितबाहो ! हरा-
धीतामितशास्त्र ! रिपुभीम ! भार्गवराम ! कमल

नाटक्कुरिञ्चि.

(७) मनुकुलतिलक ! वञ्चनपरदशकण्ठ-
घनवात ! रघुवीर ! सङ्गरधीर ! कमल

दर्बार्.

(८) सीरसमाकृष्टसारहास्तिनपुर !
घोरप्रलम्बहर ! बलदेव ! शूर ! कमल

आनन्दभैरवी.

(९) नन्दनीयतमबृन्दावनरचित-
कुन्दसायकलील ! बालगोपाल ! कमल

सौराष्ट्रम्.

(१०) कलियुगान्तभाविकल्किरूप ! सजल-
जलदाभनिजशोभ ! पङ्कजनाभ ! कमल

---

## (४. च. शिवकीर्तनानि.)

गानं—११८. कांपि. चेम्पट.

प. शम्भो ! सततं पाहि कृपारस-
सागर ! साम्ब ! विभो !

---

१. 'शील', २. 'दर्बार्' क. पाठः.

अ. जम्भारातिमुखाखिलनिर्जर-
सन्ततानतपदाम्बुरुहाव्यय ! शम्भो !

च. (१) नागविभूषितमङ्गळमूर्त्ते !
नारदादिमुनिसन्नुतकीर्त्ते !
वागमृताहतभक्तजनार्त्ते !
वारिजसममुख ! सद्गुणपूर्त्ते ! शम्भो !

(२) बाहुपरिकलितपरशुकुरङ्ग !
भासुरवृषभाधीशतुरङ्ग !
साहसपरसुरवैरिविभङ्ग !
सर्वलोकनयनाधिहराङ्ग ! शम्भो !

(३) राजतगिरिवरकल्पितखेल !
रतिवरदाह ! जगत्त्रयपाल !
भ्राजितसोमकलोपमभाल !
पद्मनाभसहजादृतलील ! शम्भो !

---

गानं—११९. भूपाळम्. आदिताळः.

प. पार्वतीनायक ! पाहि मां भाललोचन !
पार्वतीनायक ! पाहि माम्

अ. सर्वलोकैकनाथ ! सरसिजदळनेत्र !
सर्वशं कुरु मम शङ्कर ! सन्ततं पार्वती

च. (१) गङ्गानिर्मितजटाभर ! दक्षमखहर !
गरळकलितगळ ! करधृतमृगवर !
तुङ्गबलमतङ्गदितिजभञ्जनकर !
तुहिनकरशेखर ! विनिहतपञ्चशर ! पार्वती

(२) भानुशशिरथाङ्गयुतभूमिरथ ! शम्भो !
भासमानमेरुचाप ! हे त्वं भो !
दीनरक्षणकृते ! हतपुरवर ! विभो !
देव ! दर्वीकरकृतभूषण ! प्रभो ! पार्वती

च. (३) पुन्नागवनवासकुतुक ! गोपते !
पुरुहूतसुतवरदानविलास ! पुरपते !
खिन्नतरे माय कुरु दयां सुरपते !
खेदमाशु नाशय मामकं भूतपते ! पार्वती

---

गानं—१२०. शङ्कराभरणं. चेम्पट.

प. नृत्यति नृत्यति साम्बाशिवे। धृक्ट्थों
धृक्ट्थों धृक्ट्थों धृक्ट्थोमिति
अ. नित्यविमलतनुरङ्घ्रिविनतनिज-
भृत्यशुभकरणधीरनुसायं नृत्यति
च. (१) पादशोभिमणिनूपुरविराचित-
भावुकक्वणघणरणितमुदितमति-
रादरेण पुरुहूतकलितवरहारि-
वेणुरुतलोलमौलिरिह नृत्यति
(२) नन्दिकेश्वरसुवादितडमरुक-
नन्दनीयड्डुमुड्डुमुरवपर ! सुर-
सुन्दरीकरविलोळितचामर-
वृन्द एष शिशुसोमधरो बत नृत्यति
(३) पापहीनमुनिसेवितपदयुग !
पद्मनाभसहजापतिरशरण-
तापदारणपरोऽयमनिन्दित-
धन्यशीलनिवहो गिरिशो बहु नृत्यति

---

गानं—१२१. पूर्वकल्याणि. चेम्पट.

प. पञ्चबाणतनूहर ! पाहि शम्भो ! सन्ततं
अ. किञ्चन ते कृपया मे खेदमपोहयेश ! पञ्च

च. (१) हेमगिरिशरासन! हेरम्बजनक! भक्त-
कामितदाननिरत! कामसेवित!
सोमपोतधर! तुहिनभूमिधरसुताकान्त!
श्यामरुचिगळराजिसर्पहार! पुरान्तक! पञ्च

(२) कालपाशकृतावृतिकातरमृकण्डुसूनु-
पालन! हृतकृतान्त! भद्रदायक!
भालतलशोभिनेत्र! भस्मालेपाखिलगात्र!
शूलपरश्वधपाणे! शोभनवृषभवाह! पञ्च

(३) श्रीकण्ठेशामरकृतक्षीरवारिविमथने
भीकरकाळकूटं त्वं पीतवानहो
श्रीकरनामनिवह! चेतोहरतरकान्ते!
नाकेशनुत! श्रीपद्मनाभसेवकानुकूल! पञ्च

---

गानं—१२२. शङ्कराभरणं. रूपकम्.

प. कलये पार्वतीनाथं करुणावासं

अ. वलशासनादिविबुधवन्द्यमानपादपाथोजं कलये

च. (१) मकुटविराजितगङ्गं पूर्णमहितकृपामृतापाङ्गं
लोकनिकरमनोमोहनाङ्गं करनीरजशोभिकुरङ्गं
प्रकटितामरवैरिभङ्गं वरबाहुवलयितभुजङ्गं
काममकळङ्कमङ्गळरङ्गं हरमतिपृथुवृषभवरेण्यतुरङ्गं कलये

(२) मल्लिकामुकुळाभरदनं सोममज्ञिममदहरवदनं
शश्वदुल्लसदचलेन्द्रसदनं कृपादूरितसेवककदनं
मल्लाक्षिमानसमदनं बहुमान्यचरितपारिषदान-
न्दनं कल्यनयनविलसदन-
ङ्कुशकनदुदयदनलशलभितमदनं कलये

---

१. 'हन! प' क. ख पाठः. २. 'चाप्प्' क. पाठः.

च. (३) शशधरशोभिजटान्त सर्वेशमलहृतिपटुपादान्तं
पादविशसितघोरकृतान्तं मुनिविमलहृदयाम्बुजभान्तं
विशरणभवसङ्कटान्तं गुहविघ्नेशविलसदुपान्तम्
अतिविशदसितोपलकान्तं
लोकविदितशुचीन्द्रपुराख्यनिशान्तं कलये

---

गानं — १२३. कल्याणी. चेम्पट.

प. अद्रिसुतावर ! कल्याणशैलशरासन !
मामव शम्भो !

अ. भद्रापारदयाम्बुनिधे ! वरपन्नगाभरण !
लोकशरणानिशम् अद्रि

च. (१) देवनदीसमलङ्कृतनिजजट !
दीनलोकपरिपालक ! सुविमल-
भावयोगिहृदयाम्बुजनिलय ! सु
धावदातमृदुहसित ! विभो !
पावनानुपमचरित ! निवारित-
पापजाल ! विबुधौघविनतपद !
सेवकाखिलविषादहरणचण !
चित्तयोनिदहनातिमहित ! पर ! अद्रि

(२) शीतभानुपृथुकावतंस ! रिपु-
जातवारिधरमारुत ! निरुपम !
वीतमोहमदकैतव ! पटुतम-
भूतवृन्दपरिवृतसविध !
पूतनामनिकराश्रितजनघन-
पुण्यजाल ! रजताद्रिकृतनिलय !
भूतिदायक ! मनोज्ञसुगुण ! हरे-
सूतिपाशुपतसायकद ! सततम् अद्रि

---

१. 'चूतसायकमनोज्ञ ! ह' क ख. पाठः

च. (३) घोरपुरविपिनदाव ! मृकण्डुकु-
मारभीतिविनिवारण ! शरदिज-
सारसारसदळोपमलोचन !
सामजाजिनदुकूल ! विभो !
पूरिताश्रितमनोरथ ! शङ्कर !
भारतीशसुरनायकसेवित !
नारदादिमुनिगीतचरित ! पद्म-
नाभसेवकजनानुकूल ! परम् अद्रि

---

गानं—१२४. असावेरी. चेम्पट

प. भगवन् ! समयोऽयं मयि भद्रकटाक्ष सकृत्
[कर्तुं भगवन् !

अ. नगजाभूषितवामतनो ! प-
न्नगराजालङ्कृतसर्वाङ्ग ! भगवन् !

च. (१) चारुकलानिधिलाळितकलाप !
चामीकरभूधरवरचाप !
मारवीरकृतकोपाटोप !
महितविमलविज्ञानस्वरूप !
दारितघनदक्षकन्धर ! बृन्दारकालिरक्षानिपुण !
मुरारिकृतकटाक्ष ! अमृतरसपूरभरितभिक्ष !
नारदाद्युदारपक्ष ! वरपरिवार ! शारदनीरदनिभशरीर !

वारितविनतजनाखिलशोक !
पूरितवाञ्छितसकलश्रीक !
भूरितरापज्जलनिधिनौक !
धृतकोमळपदनाळीक ! भगवन् !

(२) भीमगजासुरघनमदहरण !
भीतविनतजनविपदुद्धरण !

सामजवरचर्माम्बरभरण!
सकललोकसम्पूजितचरण!
धामनिधिनिवास! दरकुन्दाभमन्दहास! जग-
[दभिराममुखविकास!
अत्यन्तरमणीयवि र! भीमभवविरामकर!
सुपर्वसुललामपद लामविलसदळिक!
हैमवतीमोहनादि॰॰ङ्ग!
अमितदयारसविलसदपाङ्ग!
कोमळकरपरिकलितकुरङ्ग!
कुरु मुदं मम वृषभतुरङ्ग! भगवन्!

च. (३) कैलासाचलविहरणलोल!
करकमलकलितडमरुकशूल!
भालविलसितज्वलनज्वाल!
लीलाकबळितसुमहाक्ष्वेळ!
कालमदविदार! अवितमृकण्डुमुनिकुमार!
द्रुहिणकपालकण्ठहार! आश्रितहृत्पद्मशुभविहार!
हेलिघनरागालिहरणचणनिजमौलिसिंहकेलीधृत-
[सरिद्वर!
हेलानिर्मितविश्वविरोचन!
नालीकाग्निज्वलनविलोचन!
वेलातीतभवार्तिविमोचन!
विना त्वां मम न गतिः काचन भगवन्!

---

गानं—१२५. द्विजावन्ती. चेम्पट.

पं. परमभद्रकर! पञ्चनदीश! प्रणतचित्तनिवेश!
अ. चरणशरणमगतिं जनमेनं चारुकृपार्द्रकटाक्षेण
सकृत् स्नपय हृदयसन्तापं प्रशमय परम

च. (१) त्वामहं जगतां शरण्यमुपास्य चिरमसह्यसंसृतिबा-
धामनुभवामीति यदिदं तत् किं वा समुचितं
भूमिधरशरासन! विचित्रतरभूतभौतिकसृष्टिविधातु-
र्मामकीनदुरितकर्मसमुदयमखिलमपि विधूय सपदि परम-
क्षेममाकलयितुं बत तव लोकेश्वरस्य
शक्तिरार्य! नो वा परम

(२) काळकूटमुदीक्ष्य दिशि दिशि कान्दिशीकेषु किल [सुरेषु
लीलया कबलयित्वा तं त्रिभुवनं संरक्षितं;
नीलकण्ठ! निखिललोकभयहर! निरुपमाद्भुत!
सुमहानुभाव!
भालनयन! परमेश्वर! किञ्चिदपाङ्गवीक्षण-
साध्ये मदीय-
पालनेऽद्य कः प्रयास इह नृपालमहितसुमहा-
शक्तेस्तव परम

(३) मृत्युपाशकलितं मुनीन्द्रापत्यमवितुमाशु लिङ्गान्नि-
र्गत्य सदयमपराधिनं तं घनरुषा सन्निगृह्य
अत्यन्तभीतमवनतं तमपाङ्गवीक्षणपात्रमकार्षीः;
नित्यशुद्धबोधरूप! विबुधस्तुत्यचरित!
निरवधिघनतरभव-
मृत्युचकितमतिदीनं तावकभृत्यमिममुपेक्षितु-
मुचितं वा परम

(४) अन्तरा त्वत्स्वरूपं स्फुटमादरेण दर्शयित्वा वि-
भ्रान्तचित्तं मां घनभवपाशमुक्तं मा वितनुषे;
किं तवोदेति न करुणा मयि हन्त दुष्टदुःख
वारयितुं?
दन्तिनं वितीर्य सुलभमतिसमुदयगमनमैरावत- [सन्निभम्
अन्ततः सर्वज्ञ! महेश! किमङ्कुशप्रदानाय [विवादः परम

च. (५) सादरं त्वत्कटाक्षलेशसम्भवश्चेदखिलं दुःखं
सूदितं स्याद् यथा चान्धं सूर्योदयानन्तरं;
आदिदेव! विमलभाव! परमशिवाखिलामरेश्वर!
वेदवे(द्य!) भालसीम्नि विधिना लिखितं दुरक्षर-
[निकरं ज-
न्मादिदुःखसञ्जनकं ममापि निषूदय प्रमोदम-
[चिरमातनु परम

---

गानं—१२६. आरभी. चौप्प्.

प. वन्दे महेश्वरमिन्दुकलाधरं वागीशादिविनुतवैभवं
अ. दन्दशूकनिकरदामशोभितगळं
नन्दनीयशुचीन्द्रनगरनायकमीशं वन्दे
च. (१) भसितद्विगुणितोरुसितभासं वर-
प्रज्ञातीर्थतटान्तकृतवासं पुरो
लसितशम्याकं पालितदासं बुधा-
लघुपापहरमतिमृदुहासं चर्म-
वसनं भूतसंवृतं वासवशुचिकर-
मसदृशमहिमानमम्बिकाप्राणेशं वन्दे
(२) हरिहरसुतगुहपरिवृतं मात-
ङ्गाननपोषकमविरतं वृष-
वरनिजवाहनसेवितं मृदु-
वचननन्दिताशेषसुरजातं लोक-
शरण गङ्गाधरं शान्तयोगिनिषेव्यं
स्मरणीयपदयुगं सामोदं शुभकरं वन्दे
(३) मदनदाहकभालतलनेत्रं त्रिपुर-
मारुतोरगं देवनुतिपात्र विधु-
वदनं वासुकिकटिसूत्रं कुन्द-
रदनमलङ्कृतराजतगोत्रं लोक-

मुदितरथोत्सवं मोहनतमरूपं
पदनतसदयं श्रीपद्मनाभतोषिण वन्दे

गानं — १२७. आनन्दभैरवी. चेम्पट.

प. पाहि तरक्षुपुरालय! मामयि पावनतरचरित!
अ. देहि तवाङ्घ्रिपयोजरतिं मम
दीनदयापर! देव! पुरान्तक! पाहि
च. (१) भालनयनशलभीकृतमन्मथ!
पाणिविराजितकुरङ्गपरश्वध!
कालमहादववारिद! निरुपम! कञ्जरुचिरचरण!
शैलसुतामुखपङ्कजमधुकर!
सामजचर्मदुकूल! जगन्नुत!
नीलकण्ठ! रिपुपन्नगसमुदय-
नीलकण्ठ! जगदीश्वर! जय जय पाहि
(२) नागवरेण्यविभूषितकन्धर!
नारदशुकसनकादिनिषेवित!
भागधेयभृतलोकनयनपद! भव्यगुणनिवास!
वागधिपानिशवन्दितशुभपद!
वारिजदलनिभनेत्रयुगाव्यय!
रागविनिन्दितबिम्बफलाधर!
राजतगिरिवरवास! महेश्वर! पाहि
(३) कामितवरदायकामितभुजबल!
कल्याणगिरिवरकार्मुकविलसित![1]
भीमभवजलनिधितारक! सुरगणभीकरासुरदमन!
सोमकलाञ्चितशेखर!
नतजनशोकतिमिरसमुदायदिनेश्वर!

---

१. 'रिका' क. पाठः.

रामणीयकनिकेत ! वृषासन !
राजराजसख ! शङ्कर ! सन्ततं          पाहि

---

गानं—१२८.          मोहनं. झम्प.

प. कृपाकटाक्षं कर्तुं मयि बत किमेवमीश्वर !
पराङ्मुखोऽसि

अ. अपारतापत्रयेण सुतरां
तपामि पञ्चनदीश्वर ! निरवधि-          कृपा

च. (१) घोरभीमभवाम्बुराशिमपारमेतं तर्तुं त्वां श्रुति-
सारवेद्यमविज्ञाय कथङ्कारमहं परिशक्नोमि
अगारतनयदारधनपरिवारसुखसम्भरितमिमं सं-
सारमनिशं विचार्य सकलमसारमिति सहसा
[संन्यस्य
मारवीरशासन ! जनकादिविचारणीयममलं तारार्थमुदार-
मन्तरं विज्ञातुं पदसारसं तव शरणं गतवति          कृपा

(२) वेदवेद्य ! सदा नु तव शुभपादभजनपरायणेऽस्मिन्
खेदमतिमातनुषे चेदिह को देवः शरणं मे
सादरं समुपेत्य सविधं खेदमखिलमपोह्य
समधिकमोदमाकलयाशु विफलविवादवचनमिदं
तव मास्तु हृदि देवमखिलेशं त्वां भाग्योदयेन
सुपरिवर्ण्य शुकसनकादिसेव्यदिव्यमूर्त्तिसाक्षा-
त्कारमेव चिरकालं वाञ्छति          कृपा

(३) तोयजासनगेयविलसदमेयगुणसमुदाय ! भक्तवि-
धेय ! जगदाधेय ! तरणोपाय ! परिविल-
[सदद्भुताधेय
हेयदेहात्ममतिं सपदि विधूय
परमं तव चिद्रूपमयि मम करामलकवद-
पायरहितं सदा विधाय गेयरूप ! भगवन् ! श्रीगौरी-

नायकेन्दुशेखर! निरवधिकश्रेय आशु
कलयितुमवसरमिति भूय एवमनुदिनमाकांक्षति कृपा

---

(४. छ. सुब्रह्मण्यस्तोत्रम्)

गानं — १२९. केदारगौडं. चाप्पु.

प. देव! मामयि पाहि षडानन! दिव्यकेकिवाहन! शूर!
अ. सेवकाखिलतापनिवारण!
. श्रीहरिगीतपुरालयदीप! देव
च. (१) तारकासुरदेहविभङ्ग! गभीरतरगमनविजितमातङ्ग!
भूरिकरुणारसराजदपाङ्ग! पूतचरितहृदयाम्बुजभृङ्ग! देव
(२) गङ्गाधरातिमनोज्ञकुमार! खलतरवैरिसमूहविदार!
मङ्गलचरित! पयोधिगभीर! मारजनकभागिनेयोदार! देव
(३) देवसेनाधिप! मञ्जुलशील! दीनतरजनतापालनलोल!
श्रीविजितानङ्ग! मोहनलील! श्रीपद्मनाभहृदयानुकूल! देव

---

(४. ज. देवीस्तोत्राणि.)

गानं — १३०. नीलाम्बरी. चेम्पट.

प. आनन्दवल्लि! कुरु मुदमविरतम् आनन्दवल्लि!
अ. दीनजनसन्तापतिमिरामृतकिरणायितसुहसे!
धृतशुकपोतविलासिनि! जय परमानन्दवल्लि!
च. (१) जम्भविमतमुखसेवितपदयुगले! गिरिराजसुते! घन-
सारलसिताविधुखण्डसदृशनिटिले!
शम्भुवदनसरसीरुहमधुपे!
सारसाक्षि! हृदि विहर दिवानिशम् आनन्द
(२) केशपाशजितसजलजलदनिकरे! पदपङ्कजसेवक-
खेदजालशमनैकपरमचतुरे!

नाशिताघचरिते ! भुवनत्रय-
नायिके ! वितर मे शुभमनुपमम् आनन्द

च. (३) शारदेन्दुरुचिमञ्जुलतमवदने ! मुनिहृदयनिवासिनि !
चारुकुन्दमुकुलोपमवररदने !
पारिजाततरुपल्लवचरणे !
पद्मनाभसहजे ! हर मे शुचम् आनन्द

---

गानं—१३१. अठाण. अटन्त.

प. श्रीकुमारनगरालये ! करुणालये ! कमलालये !
अ. श्रितजनकल्पपादपे ! श्रीवासुदेव-
वदनाम्बुजमधुपे ! श्रीकुमार

च. (१) मञ्जुरणितमणिनूपुरे ! करशिञ्जितकङ्कणभासुरे !
मञ्जुळाननसुधाकरे ! नवकञ्जदळकलितविलसित-
[चिकुरे !
अञ्जनाञ्चितदृगञ्चलभञ्जितखञ्जनद्वितयमञ्जिम-
पु(ञ्ज ? ञ्जे !)निरञ्जनाशयनिकुञ्जकेलिरसिके ! अव
[मृगमदतिलके ! श्रीकुमार

२) कम्बुवरसदृशकन्धरे ! जगदम्ब ! पालितवसुन्धरे !
बिम्बफलरुचिधराधरे ! लोलम्बजालरुचिविल-
[सितचिकुरे !
अम्बकच्छविविडम्बितदळदसिताम्बुजद्युति-
[कदम्बकटम्बरे !
शम्बरारिहरिशम्बरार्चितपदे ! पदनतजनशुभदे ! श्रीकुमार

(३) मन्दगमनजितवारणे ! सुरव्रजवैरिविनिवारणे !
इन्दिरे ! भुवनकारणे ! कुरुविन्ददन्ति ! किसलय-
[मृदुचरणे !

मन्दहासरुचिनिन्दितेन्दुकरकुन्दवृन्दमकरन्दाब्दु-
सन्दोहसंवलितसुन्दराम्बुजास्ये! जगदुपास्ये! श्रीकुमार

---

## वैराग्यकीर्तनानि।

गानं—१३२. भैरवी. चेम्पट.[1]

प. रमापते! कृताञ्जलिबन्धमेतावदेव किमपि याचे
[कुरु करुणां

अ. अमेयसान्द्रानन्दमूलम् अनन्त! ते पादकमलं
समाश्रितं विभो! मामतिदुरसहेषु विषयेषु मा
[क्षिप रमापते!

च. (१) वारिजाक्ष! नृणां जीवितं किल जगति
वत्सरशतकं नियतं;
हा रजनीरूपेणैतदर्धमपयाति शेषं
दारसुतधनचर्यागारपोषणचिन्तया रमापते!

(२) देहिषु बहुषु भुवने मानुषजन्म
देव! दुर्लभतमं नूनं;
श्रीहरे! ततोऽपि तव सेवनं दुरापं; तद-
पीह विन्दन् न मोदते यो हि नातोऽधमो भुवि रमापते!

(३) भोगिभोगशयन! तन्मे मानसं पद-
पुण्डरीके तव निरतं
सागरगभीर! शौरे! सरसमारचय सदा
वागधीशमुखसुरवन्दित! श्रीपद्मनाभ! रमापते!

---

गानं—१३३. गोपिकावसन्तम्. अटन्त.

प. धन्योऽयमेव खलु भवति भूतले
धन्योऽयमेव खलु

---

1 'आदि' क ख. पाठ २ 'न्वं तव दे', ३. 'मा बत दु' मुद्रितपाठः.
४. 'यपो' क. ख. पाठ..

अ. अन्यसमदैवतागण्यमहिमानं
विन्यस्यति हृदि यो विशदमिह मुकुन्द धन्यो

च. (१) चिरकालार्जितेनापि शृणुत किमु वित्तेन
चरमकाले नैव परमायाति हि साकं;
परमपूरुष! पदपङ्कजं सकृदपि
शिरसा यो नमस्यति श्रीकरलाञ्छितं धन्यो

(२) धनदारसुतागारघनसंसारवारिधौ
मनुजोऽयमहोरात्रं मज्जति वृथा बत;
सनकादिमुनिगेयं शौरेरिह चरितं
मनसा स्मरति यो वा महापापविदलन धन्यो

(३) कामक्रोधलोभादिखलवैरिसमुदायं
भीममतिभक्त्या सम्भिद्य निरयमूलं
दामोदर! हरे! माधव! पद्मनाभेति
नामानि जपति यो नतकैवल्यकारीणि धन्यो

---

गानं — १३४. कामोदरी. अटन्त.

प. कारणं विना कार्यं नोत्पद्यते किमपि
कञ्जनाभ! नियतं

अ. नीरदनीलमनोहरतरमूर्त्ते!
दारिताश्रितजनदारुणविविधार्त्ते! कारणं

च (१) जननकारणं कर्म; ज्ञानकारणं विद्या;
धनमाटोपकारणं; तरुणी मोहकारणम्;
अनयो हानिकारणं; आधी रोगकारणं;
धनसमृद्धिकारणं ननु धर्मो; जगदीश! कारणं

(२) तरुकारणं बीजं; धैर्यं जयकारणं;
परमदैन्यकारणं भवति हीनयाचना;

---

१. 'न्या', २. 'त्रिपुट' क. ख. पाठ..

करुणाकारणं साधुचरितशालिता, लोके
तरळता निखिलापदामिह कारणं | कारणं

च. (३) शमदमादिकारणं साधुशास्त्रनिषेवा;
समसस्याप्तिकारणं सारवृष्टिरेवाहो;
तिमिराभावकारणं दिनमणी रमाकान्त!;
मम शर्मैककारणं कमलाक्ष! तव पादौ | कारणं

---

गानं—१३५ शुद्धभैरवी. अटन्त.

प. विहर मानस! सदा देवे नित्यं
अ. वहसि किमु ममतां वद हा संसारे | विहर

च. (१) क्षणभङ्गुरमवेहि देहं हन्त,
चञ्चलतां जहि मा कुरु मोहं;
प्रणयं कुरु माधवचरिते दिव्य-
पावनतरलीलारसामृतभरिते | विहर

(२) कलय मा मा विद्याटोपं; जातु
हलहल मा स्मर दारुणपापं;
खलसौहृदं मा कुरु हीनं
घोरकलुषनिरयपातपरमनिदानं | विहर

(३) करुणां कुरु सततं; लोकं सर्वं
कलयात्मसममये; सन्त्यज शोकं;
सरसजलदसदृशाभं नित्यं
सर्वात्मना भज श्रीपद्मनाभं | विहर

---

गानं—१३६. सामम्. अटन्त.

प. स्मर हरिपादारविन्दं मुदानिशं
अ. तरसा जहि ममतां दारसुतादिषु,
कुरु सज्जनसङ्गमुरुपुण्यसमवाप्यं | स्मर

च. (१) यदिह लभसे बत वित्तं तेन
मुदमवाप्नुहि भाग्यायत्तं;

१. 'त पालितलोका! त' क ख पाठः

अद्यं संसेव्य धनमदिरामत्तं हन्त
मा खेदय चित्तमहो मुधा — स्मर

च. (२) हरिमन्दिरे वस नित्यं;
काममयि मा मा वद बतासत्य;
परमिह भज सदा माधवभृत्यं
पावनतरनिजकृत्यमहो मुदा — स्मर

(३) परमपूरुषमनुवारं भज
पद्मनाभमलमुदारं
करुणापूर्णनयनगसितशुभशरीरं
कलितकौस्तुभनवहारमहो मुदा — स्मर

---

गानं—१३७. झेंझोटि. आदिताल.

प. माधवमाकलयेह मुदा

च. (१) मांसवसादिमये ललनाङ्गे
मा मा सततं विहर हृदा — माधवं

(२) जीवितमहह घटादयि भिन्ना
न्नीरमिव स्रवतीह सदा — माधवं

(३) यदि यतसे न शुभार्थमिदानीं
प्रभवति यत्नो जगति कदा? — माधवं

(४) आयतने शिखिना बत दीप्ते
कूपकृतिः क्वनु भवति कदा? — माधवं

(५) योजय पाटलपङ्कजसरुचा
मानसमम्बुजनाभपदा — माधवं

---

गानं—१३८. माञ्जि. चेम्पट.

प. हरसि मुधा किमु हलहल कालम्

अ. हरिचरणाम्बुजमयि भज मानस!
निरयमयकलुषनीरधिपोतं — हरसि

---

१. 'द्द' क पाट.

च. (१) स्मरदहने मा मा शलभतामेहि
तरुणीन्धनभृशपरिलसिते हरसि

(२) सुरतटिनीतटे सुखतरमावस
परमहंसनिकरपरिवृतोपान्ते हरसि

(३) अतिमेचकमुदिराभमये भज
श्रितकुशलदमिह श्रीपद्मनाभ हरसि

गानं—१३९. अभङ्ग्.

च. (१) परमात्मैवैतदखिलं जगदिति भावयालं
नामरूपादिनान्यथा भासमानमहो वृथा
दारुमये नरे यथा पूरुषता नु वितथा
पद्मनाभपादमूले भक्तिमालम्ब्य विगले परम।

(२) कुरुते नहि कस्य मोदं सङ्गाद् विरतिरभेदं
कामक्रोधादिदस्यूनां नाशिनी स्वान्तजातानां
मोहदावाग्निकालिका मान गोल्लासदीपिका
पद्मनाभाङ्घ्रिसेविना प्रापणीया श्रमं विना परम।

(३) नियत कृतिनो दृढ ते ये वै सत्पदे रमन्ते
निस्तुलानन्दसागरे नित्यबोधात्मके परे
मालया वेदवचसां वेदितव्ये वरीयसां
पद्मनाभाह्वये सदा योगिवर्यावृते मुदा परम।

(४) रमतामनिशं मनो मे हरौ पद्मनाभे श्यामे
मन्दहासाञ्चितानने पङ्कजायतलोचने
कौस्तुभोद्भासिकन्धरे काञ्चनभासुराम्बरे
नीलनीरदाभकेशे स्यानन्दूरनगरेशे परम।

गानं—१४०. शङ्कराभरणम्. अटन्त.

प. अहो चित्त! चिन्तया किं तया हन्त ते विषयेषु
अ. बहुव्यामोहदायिषु दुःस्वप्नसमेषु
एषु दुस्त्यजमत्सराग्रहरोषकारिषु अहो

च. (१) मन्दहसितमधुमञ्जुमुखाम्बुजम्
इन्दीवराक्षीणामिति मा मा गणय
स्यन्दिपूतिकफसान्द्रमिदं सर्वं
निन्दनीयमिति निखिलबुधजननिगदितं खलु हा अहो

(२) कळकळभाषिषु कथमपि चलितेषु
कलितदरहसितकम्रमुखेषु
कलय मा रतिममीषु सुतेषु
कलुषनिरयपातकण्ठबद्धशिलानुकारिषु हा अहो

(३) मदभरमन्थरमातङ्गतुरङ्गम-
मदनीयमृगमदमणिहर्म्यादीनि
वद वद वस्तूनि वपुषि विलयजुषि
ददति मुदं कियदचिररुचिलसितचपलानि हा अहो

---

४. अ. नवरत्नमालिकाकीर्तनानि ।

श्रवणम् ।

गानं—१४१. भैरवी. चेम्पट.

प. भवदीयकथाभिनवसुधायां परिमज्जतु
मे श्रुतियुगली

अ. भवसागरतरणपराणां या
भवति हि नौका विगलितशोका भवदीय

च. (१) सकलभुवनमान्यो ननु पाराशरमुनिरपि
भगवाननुपमितां
शुकमुखमुनिवरनिवहैरिह यां
प्रकटतमामकरोदपि भुवने भवदीय

(२) प्लवगकुलपरिवृढेन परं जा-
म्बवता गदितां यां किल कलयन्
जवसमुपागतगरुदिह जातः
सम्पातिर्विगतरुगपि शौरे ! भवदीय

च. (३) परमहंसनिवहानां यां
पापमहाधरणीधरभिदुरां
परमापिबतां तृप्तिरभून्नो
पद्मनाभ! जगदीश! मुरारे! भवदीय

---

## कीर्तनम् ।

गानं — १४२. केदारगौळम्. झम्प.

प. तावकनामानि शुभदानि प्रजपानि
अ. देवदेव! पतितोऽपि दिव्यतमानि यानि
केवलमास्वाद्य याति केशव! परमसृतं तावक
च. (१) वाचंयममौलिरपि नूनं यतो हि परं
वाल्मीकिरवाप महिमानं,
श्रीचकोरसुधाकर! श्रितकामलपदजाता
सा च कृतिरपि तदीया जयति भुवनं पुनन्ती तावक
(२) अलघुसर्वनिन्द्यचरितेन सदैव हन्त
कुलटासंसक्तहृदयेन
जलजाक्ष! [illegible]रम् अजामिळभूसुरेणापि
प्रलपता यदेकमिह किल मुक्तिरासादिता तावक
(३) बालचन्द्रशेखरोऽपि कामं यान्येव सदा
पद्मनाभ! जपति गतकामं
शैलराजतनूभवया साकमतिविमलरुचौ
कैलासाचले महति कलितवसतिरनिशं तावक

---

## स्मरणम् ।

गानं—१४३. नीलाम्बरि. अटन्त

प. सततं संस्मराणीह सारसाक्ष! भवन्त
स्यानन्दूरेश्वर!

---

१. 'मा', २. 'त्रिपुट' क. पाठः.

अ  अतिसान्द्रमोहगाढान्धकारसञ्चय-
हतिसारसाङ्घिंकरायित जगदीश  सततं

च. (१) निरुपमपयोवारिनिधितुङ्गतरङ्गौघपरिलुठनेन परं
परिसरभुवि ततवरमणिरुचिभृते सरसं श्वेतान्तरीपे
उरगकुलनायकवरमञ्चतलोपरि
परिशयितमनिशं परमपूरुषमीशं  सततं

(२) इन्दीवरासितसुन्दरवपुषमानन्दैकपदमीश्वरं
कुन्दावदाताभमन्दहासरुचिनन्दितभूमीन्दिरं
वृन्दारकमहर्षिवृन्दवन्दितमिह
वन्दारुजनकल्पपादपायितमहो  सततं

(३) विशदनाभीपुटविलसदब्जयासिनाकुशभक्तिभरजुषा
भृशमुदा विधिनापि विहितत्रयीघोषनिशमनेन सम्मुदितं
दृशि पूर्णकरुणं सुदीनजनपालकं
प्रशमितभवतापं पद्मनाभमहं  सततं

---

पादसेव[illegible]

गानं—१४४.  तोटि. रूपकम्

प.  पङ्कजाक्ष! तव सेवां बहुधा करवाणि
अ.  शङ्करवलशासनमुखसन्नुतोरुकीर्ते!  पङ्कजाक्ष!
च. (१) श्रीधर! तव पादुकां शिरसा वहानि
साधुतालवृन्तेन च संवीजयानि  पङ्कजाक्ष!
(२) सरसं संवाहयानि मुरहर तव चरणौ
करवै श्वेतातपत्रधरणं तव शौरे!  पङ्कजाक्ष!
(३) उपहराणि तव संस्फुरदुरुतरकुतुकेन
उपकरणानि च हितानि सपदि पद्मनाभ!  पङ्कजाक्ष!

---

१. 'त' क. घ पाठः  २ 'शायिनम' मुद्रितपाठः.

## अर्चनम् ।

गानं—१४५. बिलहरि. अटताळ[1].

प. आराधयामि करणत्रयेणाहम् अनुदिनमपि[2] भवन्तं

अ. धाराधराभ! बुधाधिनिवारण! आरा

च. (१) नवमणिमयपीठे ननु सन्निवेशय-
न्नविळम्बं सुशिशिरेणाम्भसा सुरभिणा
सविनयादरमहो सस्नापयामीह
भुवनपावनमूर्ते! भुवि किमितो भाग्यम्! आरा

(२) कमलारातिदीधितिगौरिमावहेनाति-
विमलवाससा निरुपम! संवेष्टयामीश!
अमितगन्धेनालम् अङ्गरागेण च
समलङ्करोमि भूषणैरपि वरैरहम् आरा

(३) तुळसीकुन्दमल्लिकाद्युरुसूनजातेन
कळधौतभाजने कल्पितेन पूजन
नळिनाक्ष! रचयामि नाथ! धूपदीपम-
ङ्गळनिवेद्यानि च कलये पङ्कजनाभ! आरा

## वन्दनम् ।

गानं—१४६. वेगट. झम्प.

प. वन्दे देवदेव! तव पादाम्भोजयुगलं

अ. मन्दाकिनी भजति नाम मकरन्दलीलां यदीयां वन्दे

च. (१) अमितसुकृतनिकेतनायितयशोदाङ्क-
समाधिवसितं परमसान्द्रारुणिमावहं
दमितखलशकटाह्वयदानवासुमनपायं
सुमधुरारवमञ्जीरशोभितमनारतं वन्दे

---

१. 'त्रिपुट' क, 'अटन्त' घ. पाठः. २. 'पि' क. घ. पाठ

च. (२) पशुपनारीजनराचितपरिचुम्बने तदीयाक्षि-
भूशनीलिमानुपङ्गेण शशधरायितनखरं
विशदकान्तियुतं गोकुलबृन्दावनकृतचरणं
विशरणजनाधिभारविशसनपरायणं वन्दे

(३) पवनाशनवरकाळीयफणतटविहितनटनं
भुवनरम्यवेणुवादनविरचितविविधताळं
शिवसनकविधिसुरेशसेव्यमपवर्गकरं
भवभयैकशमनपरं पद्मनाभ! रमाकान्त! वन्दे

---

दास्यम् ।

गानं—१४७ आहरि. अटन्त.

प. परमपूरुष! ननु कर्म समस्तं भवति समर्पयामि

अ. परया तव मायया बत मोहितोऽपि परम

च. (१) यदिह निशमयामि यदवलोकयामि
यदपि च जिघ्रामि यदपि ददामि परम

(२) यदहमश्नामीह यदथ वदामि यदनुस्पृशामीश!
यदपि दधामि परम

(३) विदितमविदितं वा विहितमविहितं
तदपि पङ्कजनाभ! तव सेवकोऽहं परम

---

सख्यम् ।

गानं—१४८. मुखारि. अटन्त.

प. भवति विश्वासो मे भवतु सदा

अ. विविधतापहारिणि वीतसंशयलेशं भवति

च (१) श्रुतिराशिषु भुवने सुबहुधा रमाकान्त!
बत विद्यमानेषु बहुषु भिन्नमतेषु
इतरत्र न मे भूयादीशे पक्षपातोऽपि
नतपाल! यथा तथा नाथ! सुदृढमये भवति

---

१, २. 'त्रिपुट' क. पाठः.

च. (२) वनसञ्चरणनदीप्रतरणरणाद्यासु
घनभीतिकरासु च खलु विपदवस्थासु
वनजाक्ष! भुवनपावन! नो बिभेमि यथा
ननु तथा निरपायो नारदादिपूजित! भवति

(३) वरद! पाण्डवेयोद्धवाक्रूरादयो येन
परमविपदम्भोधिपारं गता नूनं
परमवापुरिह ते पदमपि कृपया ते
परचिदानन्द! श्रीपद्मनाभ! मुरारे! भवति

---

आत्मनिवेदनम्।

गानं—१४९. नाथनामक्रिया. रूपकम्.

प. देवदेव! कल्पयामि सोऽहमीश! मामकं
देहगेहादिकं च सकलमपि हि तावकं देव

अ. कुहनावटुरूपाय च ते महाबलिर्यथा
महति दानसमये ननु कलितवानहो तथा देव

च. (१) राजसूयसवनकर्मणीह चाग्र्यपूजने
राजिते यथा कृतं च धर्मजेन पावने[1] देव

(२) भवति यथा क्रेतुरेव क्रीतभरणपरता
अविरतं तवैव मामकावनधूर्वहता देव

(३) एवमविदुषा परं यन्मयात्र गदितं
सेवकेन पद्मनाभ! ते ग्रहीतुमुचितं देव

---

२. वर्णाः।

क. स्तववर्णाः।

गानं—१५०. शुद्धसावेरी. अटन्त.

प. जगदीश! श्रीजाने! जलजायतेक्षण! देव!

अ. विगतशमल! मां पाहि विहगवररथ! पद्मनाभ! जगदीश!

---

१. 'न!' क. पाठः.

स्व रिस धस रिस री निस रिम रिस रिम प म रिस

सुरपरिवृढसेवित! वरगुण! रिपुविमथन!

रि म पमपाधापमरि रि सरि म प ध सध

नतवरदाद्भुतभुजबल! मुनिगणनुत!

रि स मारिसरिरिसध प म पधपा म रिस

गिरिधर! मुरहर! कृपालय! भवार्तिहर! जगदीश!

च. पापजातं वारय

(१) री सा रि रि मा रिसरिसधसरिस रि म रिस रिम पापा

शौरे! श्रीवृन्दावनभुवि कृतशुभविहरण! मम पाप

(२) रिरिम्मरिसरिरिप्पपमरिस रि म प धसध पधप म पमरिस रिप

जगत्त्रितयभयङ्करकनककशिपुदलन! कनकनिभवसन! मम

(३) पाप म रिस री रिम्मारि स रि प्पा म रि सरिस

पापशमन! गोपीमानससरोजदिनकर!

ध सा स रिरिधप ध प मपधाध सा रिसमा रि सधप

सुनास! मृदुलहासजितकलानिधे! पदपयोजमित-

म प ध पामरिस रि रिम पा

निखिललोक! जय मम पाप

पापजातं वारय बहुजन्मार्जितं

तापहर! मन्नाथ! तपनहिमकरनेत्र! शौरे!

जगदीश! श्रीजाने! जलजायतेक्षण! देव!

---

गानं—१५१. तोटि. अटन्त.

प. सरिदीशावास! पाहि सरसीरुहनाभ!

अ. गरिमादिकगुणनिलय! कस्तूरिकाभाल!

स्व. सरिग्गरिस री नी धनीसरि स रिगा रिग मा गा रिसरिगा

सजलालघुमेघाभ! नीरजसदृशातिमनोहारिनयना-

रिगमा ग म पामप ध म पा ध निप धनिसरिसनी

रिकुलाधिकपाटवहर! पापनिवहवनदहन!

सरिरिगसरिनि धनिनिधधपमापधधानिधानिनिसनिससरिरिग

सुरवरकमनीजननुतमहिमाकर! धनदकुलिशधरहुतभुग-

सरिनिरिस रिनि स धनिपध मप गम ग ग रिरिसस रि रिसनि
निलनिऋतिवरुणयमहरनतपदयुग! परमपूरुष! जय
सरिदी
च. मघवारिजालकाल! वितनु कुशलमयि मघवारि
(१) सा नि धा ध ध नि ध निनि ससनि ग रिसासनीनि सा सरि
सान्ववायपृथासुतविशसनपरकौरवादिकैतव-
रि गा रि स्स रिसनि ध ध निधनिसरिग
कथानिरसहृदय! वितनु कुशलमयि मघवारि
(२) गा गा गा रिसास रि स रिनिसनिरि सनीनिस धा धा
गोगोपालकावनविधृतशिखरिवरधृतधारा-
निसानि सास्स निधानि सा नि सा धागारिनी
धरातिसाहस! तापसानिशाधारायित!
ध ध नि धनिसरिग
वितनु कुशलमयि मघवारि
(३) गारि ग गरि स रुरी स रिरिसनिस रिगस रि नी निस धाध नि
घातकहरणप्रीणितमुनिजनहृदयसरोज! सुधारस-
री सगारिसनि री रिगागरिगरी नि ग रिनिसनि री नि धनिसरिग
माधुरीशमनलोभनीयमृदुभाषण! भुवनगुरो! विहगतुरग!
मघवारि
मायापारगलील! लघुहृतशिशुपाल! लसितवनमाल!
अघमुखदानवमाननीहारतारतरणे!
अघहतिजाग्रदपाङ्ग! आश्रितलोकमन्दार! मघवारि

---

गानं—१५२. मध्यमावती. चेम्पट.

सा-सनिसनि-पापमरी-पमनिप-पमरीसा-निसरिम
प. सा द र मि ह भ जे
रिमपनि पनि सा
सारस नाभम्

मपनी-पनिमप-नीसा-सनिसरिधा-सनिधनि-पम-

अ. वेदनि कर नुत मा दि पु

मापनि पमरी रिमपनि-सा

रु ष मिह सा

ख. सानिपमरिससा-मापनिनि- सरिमरीम- रिमपमाप

साननिसरससामानूनविनुत! कार्ममसमललाम-

पम- पनि- सा- पमपा- रीमपनि सा

विलसित! सा मजपा लाहिशय! सादरं

पानिमपा-रिमपनिसा-नीसनिपामामा-पनिपा मारिसारिम

च. पालितत्रिभुवन!

(१) पाम्म रि स रि म पा नि म प रि म पा

पाप्महर! स म पा नु प म त मे[1]! पालित

(२) माप्पनि सनिमपा रिपपनीधा- रीमपा-निपाम-रिपपम

माप्रविनत! कृपाहतगिरीश! कामपारिजाततरुसम!

पा

पालित

(३) पानिपमरिमपा-निपमरिमपा- स स रि रि म पा-

पाण्डुसुतनतपादसरसिज! पातितदनुज! पा-

पनिसरिमा- पा

वन! परम! पालित

(४) नीसारि सरि मा रीमारिमपा- नीपनिपमा- नीपनिपम

नित्यारिहर! माराम! सुजपाशोणिमसमातिमोहनद-

सरिरिम प पनिनिप पम रिमरिस सरिरिमपनि पानिस

शनवसन! परिणतरस! भृतरसशतक्रतुप्रमुखानत!

रिमपम पा

निरुपम! पालित

पालितत्रिभुवन! पङ्कजातवदन!

शैलवरधरण! साधुजनशरण! पालित

रीमपसा रीसनिपमरि-पानिमपनीपनिपमनिसा

सानिसनिपम- मापमरीसरिमपनि सानि

— —

१. 'मस', २. 'म! पाण्डु' घ. पाठ..

गानं—१५३. भैरवी. अटन्त.

प. चपलसम्पदनीहमुनिनुत! सरसिजनाभ! मामव

अ. अपरिमितानन्दनिवास! हरविरिञ्चिहरिसेवित!
सपदि देहि मम कुशलं सकललोकनायक!

स्व. ग रि म ग रि ग स रिस नि धप धनिस रि निध
गरिमनिलय! सरसविधपरिजनसुखद!
निग रिग स रि सानि ध पपधनिसरि गम प
नगधर! करिभयहर! पदजितसरसिज!
ध पमध पानिधनि प धम प धपमाग रि स
गतमदपालन! विबुधमहित! मृदुलहसा
रि प मा गा गा रि गाम पध धाप म
नुपमानागारिकामपरिपूरण!
पा ध निसरिस नि गग रिसनिधनिसरिरिगग म ग रिस निस
पालितभुवन! निर्गतशमल! वरसरिदधिपकृतशयन!
नि रिसानिधपध पा म ग रिस नीधपाम ग रि
विलसामल! हृदि पापदहन! नीरदातिगुण! चपल

च. सारमृदुवचन!
(१) सानिरि सानिधा पाम ग म पा निध प म री ग म पधनि स
सारससायकोपमातिकृपान्वित! सरोजातसुवदन! सा
(२) पा धप म ग रि ग मा धप म ग गमा निध म
पातविजय! निगमादृत! विहगमान्यरथ!
ग रि मानिसनिरि
गतमाय! जलधि-
स मा रि गमपध निसरिसनिधपधनिधपम पपधनि सा
समाधिकवरद! विमलतरमुकुरशकलरुचिरदन! सा
(३) धध प मगरि ग म प ध म प म गरिसनिस निगरिग मपध
दनुसुतकरिमृगपारिवृढ! यदुवर! सुरनिकरनतपद!
पध नि धरिसानिसनिरिसनिधनिसपधनिसमपधनि
धरणीधर! सारसभवमदहर! समसरस! जलधर-
सरि गम पधनि सा
सदृशनिजकच! सा

